

हाथों को धोकर प्राणायाम करे।

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ पृथ्वीति मन्त्रस्य मेरुपृष्ठ ऋषिः सुतलंछन्दः कूर्मोदेवता आसनोपवेशने विनियोगः ॥ ॐ पृथ्वी त्वया धृता लोका देवि त्वं विष्णुनाधृता। त्वं च धारय मान्देवि पवित्रंकुरुचासनम् ॥

---

नैवेद्यं दक्षिणे वामे पुरतो वा न पृष्ठतः ॥ घृत दीपं दक्षिणे तु तैलदीपन्तु वामतः ॥ वामतस्तु तथा धूपमग्रेवा नतु दक्षिणे ॥ निवेदयेत्पुरोभागे गन्ध पुष्पञ्च भूषणम् ॥ सर्वं स्वदक्षिणे स्थाप्यं वामेचार्घ्यं निवेशयेत् ॥ स्थापयेद्धर्घ्यचोष्यादिनैवेद्यादीनिसंनिधौ ॥ करयोः क्षालनार्थाय पृष्ठे पात्रं विनिर्दिशेत् ॥ स्वस्य शक्त्यनुरूपेण सर्वं संपाद्ययत्नतः ॥ पूजाद्रव्याणि संप्रोक्ष्य मूलमंत्रेण साधकः ॥ दर्शयेद्धेनु मुद्रां च द्रव्य शुद्धिरितीरिता ॥ नैवेद्यादिकं च यत्तु पुष्पगन्धादिकञ्च यत् ॥ सर्वमाच्छादितं कार्यं यावदावाहयेत्पराम् ॥ राक्षसाः प्रति गृह्णन्तिनिराच्छादनकंयतः ॥

(१) पूजागृहस्य ईशानदिशि पूजास्थानं कल्पयित्वा गोमयोपलिप्तायां धरायां विन्दु-त्रिकोण-षट्कोण-ष्टदल-षड्विंशतिदल-भूपुरयुतं यंत्रं विलिख्य वा विन्दु त्रिकोणं वृत्तं चतुरस्रं लिखेत् ॥ तस्योपरि तीर्थमृत्तिकया शुभमृत्तिकाभिर्वेदीं रचयित्वा यवान् गोधूमान्वा वापयेत् ॥ तत्समीपे काष्ठपीठोपरि श्वेतवस्त्रं प्रसार्य गणेशादीन्स्थापयित्वा पूजयेत् ॥ पश्चात् कलशं संस्थाप्य दुर्गां पूजयित्वा स्तुवीत ॥ नवमीदिने स्थापितदेवानां उत्तर पूजनं कृत्वा विसर्जयेत् ॥



---

कुलार्णवे १ उल्लासे ॥ लोको मोह सुरांपीत्वा नवेत्ति हितमात्मनः ॥ संपदः—स्वप्न संकाशा यौवनं कुसुमोपमं ॥ तडिच्चंचलमायुश्च कस्य कस्मादतो धृतिः ॥



यजमान के हाथ में फूल सुपारी और अक्षत लेकर स्वस्तिवाचन बोलना।

ॐ श्रीमन्महागणाधिपतये नमः ॥ हरिः ॐ गणानान्त्वा गणपतिर्ठ० हवामहे प्रियाणान्त्वा प्रियपतिर्ठ० हवामहे निधीनान्त्वा निधिपतिर्ठ० हवामहे वसोमम ॥ आहमजानिगर्भधमात्वमजासि गर्भधम् ॥ १ ॥ स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ २ ॥ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः ॥ पयस्वतीः प्रदिशः सन्तुमह्यम् ॥ ३ ॥ विष्णोरराट-

---

## जौ बौने से शुभाशुभ ज्ञान ॥

### सिद्धान्तशेखरोक्त यवांकुर परीक्षा ॥

यजमानाभिवृद्ध्यर्थं अङ्कुराणिपरीक्षयेत् ॥ सम्यगूर्ध्वं प्ररूढ़ानि कोमलानि सितानि च ॥ धूम्रवर्णान्यपूर्वाणि तथातिर्यग्गतानि च ॥ श्यामलानि च कुब्जानि वर्जयेदशुभानि च ॥

### यवांकुर से फल ज्ञान ।

अवृष्टिंकुरुते कृष्णं धूम्राभं कलहं तथा ॥ अपूर्णं जननाशं च दुर्भिक्षं श्यामलांकुरं ॥ तिर्यग्गतेभवेद्व्याधिः ॥ कुब्जे शत्रुभयंतथा ॥ अशुभेचांकुरे जाते शान्तिहोमंसमाचरेत् ॥ मूल मन्त्रेण जुहुयाद्गुरुर्मूर्तिधरैः सह ॥ अघोरास्त्रेण चास्त्रेण शतं वाथ सहस्रकम् ॥

### सारस्वतेपि

प्ररूढ़ैरंकुरैः कर्तुर्निर्दिशेच्चशुभाशुभं ॥ श्यामैः कृष्णैरंकुरैरर्थहानिस्तिर्यग्प्ररूढैर्व्याधिरांदोलितैस्तैः ॥ कुब्जैर्दुःखं दुःप्ररूढैर्मृति च रोगासुग्नैः स्थानदेशेष्ट हानिः ॥

### यवांकुर रोपण नियमः

दीक्षादिवसात्प्राक् सप्तभिर्दिनैः ॥ एतेन दीक्षादिनमष्टमं यथा भवति तथा कर्त्तव्यमित्युक्तं॥ विधिवदित्यनेननवभिःत्रिभिः सद्योवेत्युक्तं ॥ तदुक्तं सिद्धान्तशेखरे ॥ प्रतिष्ठायां च दीक्षायां स्थापनेचोत्सवे तथा ॥



मसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि ॥ वैष्णव-
मसि विष्णवेत्वा ॥ ४ ॥ अग्निर्देवता वातोदेवता सूर्योदेवता
चन्द्रमादेवता वसवोदेवता रुद्रादेवता दित्यादेवता मरुतोदेवता
विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रोदेवता वरुणोदेवता ॥ ५ ॥
द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्ति रापःशान्ति
रोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म-
शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि

---

संप्रोक्षणे च शान्त्यर्थं विवाहेमौंजिबंधने ॥ सर्व मंगलकार्येषु कारयेदं-
कुरार्पणम् ॥ प्रतिष्ठादिवसात्पूर्वं नवमे सप्तमेदिने ॥ पंचमेवातृतीयेवास-
द्योवा चांकुरार्पणम् ॥ पुण्याहघोषणं कृत्वा ब्राह्मणैः सहदेशिकः ॥
मंगलांकुरस्य वपनं कुर्यात्तत्रैव चाहनि ॥ सप्तमान्नवमाद्वापि प्रागेव यज्ञ
कर्म्मणि ॥ इति

## तन्त्रान्तरेपि

उत्सवेषु विविधेष्वपि दीक्षास्थापनादिषु पवित्रविधौ च। मंगला-
ङ्कुर विशेषणपूर्वमंगलं भवति कर्मकृतं तत् ॥ शस्तयोगदिवसात्तु पुरस्तात्-
सप्तमेहनि शुभे नवमे वा ॥ पंचमेथ सुदिवसे सुमुहूर्ते मंगलाङ्कुर विधिं
विदधीतेति ॥ तत्र पूर्वेद्युरुपवासं कृत्वा स्वगृह्योक्तविधिना नान्दीश्राद्धं
कृत्वा अंकुरार्पणमारभेत ॥ तदुक्तं गुरुर्विशुद्धः प्रागेव शुद्धाहात् प्रथमे-
हनि ॥ संकल्प्योपोष्य कर्तव्यमंकुरारोपणंशुभम् ॥ कुर्यान्नांदी मुखं श्राद्धं
पूर्वेद्युः स्वस्तिवाचनं ॥ स्वगृह्योक्तप्रकारेण तदेतद्विदधीतवै ॥ इति ॥
संहितायामपि ॥ सर्वत्राभ्युदयश्राद्धमंकुरोत्पादनंतथा ॥ आदावेव प्रकुर्वीत
कर्मणोभ्युदयात्मनः ॥ इति

### हवन क्रम सूत्र ॥

आदौ गणेश्वरः पूज्यः ॐकारं पंचधा ततः ॥ गणयागो गणेशस्य
वास्तु योगिनि पूजनम् ॥ मातरो मातृपूजा च वृद्धिः श्राद्धमतः परम् ॥
ऋत्विजां वरणं रक्षाविधिवच्चकुशंडिका ॥ उत्पत्तिस्थापनंप्रोक्तंकलशस्त-
दनन्तरम् ॥ प्रधानावाहनं पूजाग्रहादीनां च पूजनम् ॥ होमंचबलिदानं च
पूजायास्तदनन्तरम् ॥ वेदपाठोग्रहां स्तुत्वाद्विजातीनां प्रतर्पणम् ॥ पूर्णा
हुत्यभिषेकं च ततोयज्ञप्रदक्षिणा ॥ विसर्जनंक्रमःशान्तेर्घनश्यामेनकीर्तिता ॥

॥ ६ ॥ विश्वानिदेवसवितर्दुरितानि परासुव ॥ यद्भद्रन्तन्न-आसुव ॥ ७ ॥ एतन्तेदेवसवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे ॥ तेन यज्ञमवतेन यज्ञपतिन्तेन मामव ॥ ८ ॥ मनोजूतिर्जुषता-माज्यस्य बृहस्पतिर्यज्ञमिमन्तनो त्वरिष्टं यज्ञठं० समिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ ९ ॥ एषवै प्रतिष्ठानाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेवप्रतिष्ठितम्भवति ॥ १० ॥ ॐ शान्तिः सुशान्तिः सर्वारिष्ट शान्तिर्भवतु ॥ ॐ सुमुखश्चैक-दन्तश्च कपिलोगजकर्णकः ॥ लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ ११ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ १२ ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ १३ ॥ शुक्लाम्बरधरन्देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशान्तये ॥ १४ ॥ अभीप्सितार्थ-सिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधि-पतये नमः ॥ १५ ॥ सर्वमंगलमंगल्ये शिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबके गौरि नारायणि नमोस्तु ते ॥ १६ ॥ सर्वदा सर्व-कार्येषु नास्ति तेषाममंगलम्। येषां हृदिस्थोभगवान्मंगलायतनो हरिः ॥ १७ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषा-मिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ १८ ॥ विनायकं गुरुं भानुं ब्रह्माविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणम्यादौ शान्तिकार्या-र्थसिद्धये ॥ १९ ॥ सर्वेष्वारंभकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवादिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ २० ॥ वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ॥ अविघ्नंकुरु मे देव सर्वकार्येषु सर्वदा ॥ २१ ॥ ॐ सिद्धि बुद्धि सहित श्रीमन्महागणाधिपतये नमः ॥ ॐ वाणीहिरण्यगर्भाभ्यां नमः ॥ ॐ लक्ष्मीनारायणाभ्यान्नमः ॥

ॐ उमामहेश्वराभ्यान्नमः ॥ ॐ शचीपुरन्दराभ्यान्नमः ॥ ॐ मातापितृचरणकमलेभ्यो नमः ॥ ॐ कुलदेवताभ्यो नमः ॥ ॐ इष्टदेवताभ्यो नमः ॥ ॐ ग्रामदेवताभ्यो नमः ॥ ॐ स्थानदेवताभ्यो नमः ॥ ॐ वास्तुदेवताभ्यो नमः ॥ ॐ सर्वेभ्योदेवेभ्यो नमः ॥ ॐ सर्वेभ्योब्राह्मणेभ्यो नमः ॥ ॐ सर्वेभ्यो तीर्थेभ्यो नमः ॥ ॐ एतत्कर्मप्रधान श्रीदुर्गादेव्यै नमः ॥ ॐ पुण्यंपुण्याहं दीर्घमायुरस्तु ॥ वामे गुँ गुरुभ्यो नमः ॥ दक्षिणे भँ भद्रकाल्यै नमः ॥ उपरि गँ गणपतये नमः ॥ हृदि दुँ दुर्गायै नमः ॥ ॐ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञांदातुमर्हसि ॥

हाथ के अक्षत फूलों को गणेशजी पर चढ़ाना फिर हाथ में संकल्प के लिए फूल अक्षत दक्षिणा और सुपारी जल सहित लेकर संकल्प करना चाहिये ।

ॐ स्वस्तिश्रीमन् मुकुन्दसच्चिदानन्दस्याज्ञयाप्रवर्तमानस्याद्य ब्रह्मणो द्वितीये प्रहरार्द्धे एकपंचाशत्तमेवर्षे प्रथममासे प्रथमपक्षे प्रथम दिवसे अह्नो द्वितीयेयामे तृतीयेमुहूर्ते रथन्तरादि द्वात्रिंशत्कल्पानांमध्ये अष्टमे श्रीश्वेतवाराहकल्पे स्वायंभुवादि मन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे कृतत्रेताद्वापरकलिसंज्ञानांचतुर्युगानांमध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे तथा पंचाशत्कोटियोजनविस्तीर्णभूमंडलान्तर्गतसप्तद्वीपमध्यवर्तिनि जम्बूद्वीपे तत्रापि नवखंडानांमध्ये नवसहस्रयोजनविस्तीर्णे भरतखंडे तत्रापि परमपवित्रे भारतवर्षे आर्यावर्तान्तर्गत ब्रह्मावर्तैकदेशे कुमारिकाक्षेत्रे मथुरामण्डले[१] रेणुका समीप क्षेत्रे[२] श्री गंगायमुनयोः पश्चिमेतटे श्रीनर्मदायाउत्तरेदेशेदेवब्राह्मणानांसन्निधौश्रीमन्नृपति वीर विक्रमादित्यराज्यातीत अमुकसंख्यापरि-

( १ ) समीपवर्ती मंडल । ( २ ) समीपवर्ती क्षेत्र ।

मिते प्रवर्तमानसंवत्सरेप्रभवादिषष्ठिसंवत्सराणांमध्येअमुकनामसं-
वत्सरे अमुकायने अमुकगोले अमुकऋतौ अमुकमासे अमुकपक्षे
अमुकतिथौ अमुकवासरे अमुकयोगे अमुककरणे अमुकराशिस्थे
सूर्ये अमुकराशिस्थे चन्द्रे अमुकराशिस्थे देवगुरौ शेषेषु ग्रहेषु यथा
यथा राशिस्थानस्थितेषु सत्सु एवंग्रहगणविशेषणविशिष्टायांशुभ
पुण्यतिथौ अमुकगोत्रअमुकनामशर्म्मा, वर्म्मा, गुप्ता, दासअहं
ममइहजन्मनिदुर्गाप्रीतिद्वारा सर्वपापक्षयपूर्वक दीर्घायुर्विपुलधन,
पुत्रपौत्राद्यनवच्छिन्नसंततिवृद्धि, स्थिरलक्ष्मी, कीर्तिलाभ, शत्रु-
पराजय, सदभीष्टसिद्ध्यर्थं यथासम्पादितसामग्र्या शारद (वास-
न्तिक) नवरात्रिप्रतिपदिविहित कलशस्थापन दुर्गापूजा कुमारी-
पूजादि करिष्ये ॥ तदंगत्वेन निर्विघ्नतापरिसमाप्त्यर्थं गणपति,
पंचोंकार, वास्तु, दिव्यादि ६४ योगिनी, अजरादि ५० क्षेत्रपाल,
सप्तचिरंजीव, सप्तऋषि, गौर्यादिषोड़शमातृका, वरुणकलश,
सूर्यादि नवग्रह, तदंगभूत अधिदेवता प्रत्यधिदेवतादि स्थापन-
पूजनानन्तर भित्तौदुर्गास्थापनावाहनं कलशस्थापनं तस्योपरि
दुर्गापूजनं वा प्रतिपदारभ्य नवमीपर्यन्तं तथा च त्रिघट्यु परिअ-
खंडदीपकं तिलतैलपूरितं तूलिकावर्तियुतं च करिष्ये वा ब्राह्मण
द्वाराकारयिष्ये ॥

अग्निकोण में गणेश पूजन ॥

हाथ में अक्षतों को लेकर मन्त्र बोलना ॥

ॐ गणानांत्वागणपतिंहवामहे कविं कवीनामुपमश्रवस्तमम् ॥
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पतआनः शृण्वन्नूतिभिः सीदसादनं ॥
ॐ हे हेरंब ! त्वमेह्येहि विक्रान्त्यम्बकात्मज ॥ सिद्धिबुद्धिपतेत्र्यक्ष
कोटिसूर्यसमप्रभ ॥ नागास्य नागहार त्वं गणराजचतुर्भुज ॥
भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥ आवाहयामि पूजार्थं

रक्षार्थं च मम क्रतोः ॥ इहागत्य गृहाण त्वं पूजां रक्ष च मे क्रतुम् ॥ ॐ भूर्भुवः स्वः गणेश इहागच्छ इहतिष्ठ गणपतये नमः गणपतिमावाहयामि स्थापयामि नमः ॥ पादयोः पाद्यं समर्पयामि नमः ॥ हस्तयोरर्घ्यं समर्पयामि नमः ॥ मुखे आचमनीयं समर्पयामि नमः ॥ सर्वांगे स्नानीयं समर्पयामि नमः ॥ वस्त्रोपवस्त्रार्थे अलंकारणार्थे कौसुम्भसूत्रं साक्षतञ्च समर्पयामि नमः ॥ यज्ञोपवीतं समर्पयामि नमः ॥ गंधंविलेपयामि नमः ॥ अक्षतान्समर्पयामि नमः ॥ पुष्पाणि समर्पयामि नमः ॥ दूर्वांकुराणि समर्पयामि नमः ॥ धूपमाघ्रापयामि नमः ॥ प्रत्यक्षदीपं(१) दर्शयामि नमः॥ धूपदीपपात्रयोरक्षतान्निक्षिपेत् ॥ हस्तौप्रक्षाल्य ॥ नैवेद्यंनिवेदयामि नमः ॥ जलेनाभ्युक्षय ॥ गन्धपुष्पाभ्यामाच्छाद्य ॥ धेनुमुद्रया अमृतीकृत्य सत्यंत्वर्तेन परिषिंचामि ( ऋतंत्वासत्येन परिषिंचामि इति सायं ) ग्रासमुद्रां प्रदर्श्य ॐ प्राणाय स्वाहा—ॐ अपानाय स्वाहा—ॐ उदानाय स्वाहा ॐ व्यानाय स्वाहा—ॐ समानाय स्वाहा—मध्ये २ आचमनीयं समर्पयामि नमः ॥ उत्तरापोषणार्थे किंचिन्नैवेद्यं निवेदयामि नमः ॥ पुनराचमनीयं समर्पयामि नमः ॥ करोद्वर्तनार्थे गंधं समर्पयामि नमः ॥ हस्तप्रक्षालनार्थे मुखप्रक्षालनार्थे जलंसमर्पयामि नमः ॥ मुखशुद्धयर्थे ताम्बूलं पुङ्गीफलं एला लवंग कर्पूरयुतं समर्पयामि नमः ॥ यथाशक्ति दक्षिणाद्रव्यं समर्पयामि नमः ॥

॥ प्रार्थना ॥

ॐ भक्तार्त्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय, भक्तप्रसन्नवर-

---

( १ ) देवतायाः धूपपात्रं तैलदीपं वामे । घृतदीपं सितवर्तियुतं दक्षिणे, रक्तवर्तियुतं घृतदीपमपि वामे । सितवर्तियुतं तैल दीपमपिदक्षे ॥

दाय नमो नमस्ते ॥१॥ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ॥ नागाननाय सितसर्पविभूषिताय गौरीसुताय गणनाथ ! नमो नमस्ते ॥२॥ अनया पूजया सिद्धिबुद्धिसहितमहागणपतिः सांगः सपरिवारः प्रीयताम् ॥

अथ पूर्व में पंचोंकार का पूजन ॥ अक्षत लेकर ॥

ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णुरथेष्ठाः सभेयोयुवास्य यजमानस्य वीरो जायतान्निकामे निकामे नः पर्जन्यो वर्षतु फलवत्योनऽओषधयः पच्यन्ताँयोगक्षेमो नः कल्पताम् ॥ ॐ भूर्भुवः स्वः पूर्वे ब्रह्मन् इहागच्छ इहतिष्ठ ब्रह्मणे नमः ब्रह्माणं आवाहयामि स्थापयामि नमः ॥ ॐ भूर्भुवः स्वः दक्षिणे गायत्रि इहागच्छ इहतिष्ठ गायत्र्यै नमः ॥ गायत्रीमावाहयामि स्थापयामि नमः ॥ ॐ भूर्भुवः स्वः पश्चिमे गोवर्द्धन इहागच्छ इहतिष्ठ गोवर्द्धनाय नमः गोवर्द्धनमावाहयामि स्थापयामि नमः ॥ ॐ भूर्भुवः स्वः उत्तरे पृथिवि इहागच्छ इहतिष्ठ पृथिव्यै नमः ॥ पृथिवीमावाहयामि स्थापयामि नमः ॥ ॐ भूर्भुवः स्वः मध्ये यज्ञपते इहागच्छ इहतिष्ठ यज्ञपतये नमः यज्ञपतिमावाहयामि स्थापयामि नमः ॥ इति प्रतिष्ठाप्य ॥

पूर्ववत् पाद्यादि से पूजन कराकर प्रार्थना ॥

ॐ ब्रह्मा देवी च गायत्री तथा गोवर्द्धनेश्वरः ॥ पृथ्वी यज्ञपतिश्चैतान् पंचोङ्कारान्नमाम्यहम् ॥ अनया पूजया सांगाः सपरिवाराः ब्रह्मादिपंचप्रणवाः प्रीणन्तु नमम ॥ तत्रैव गणेश समीपे—

अथ अग्निकोण में वक्रादिद्वादशगणेश का पूजन कराना चाहिये ।

ॐ नमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपति-



भ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्यो–विश्वरूपेभ्यश्चवोनमोनमः । ॐ भूर्भुवः स्वः वक्रादि-द्वादशमूर्ति गणपा इहागच्छत इहतिष्ठत ।। वक्रादिद्वादशमूर्तिगणपेभ्यो नमः वक्रादि-द्वादश-मूर्ति-गणपान्आवाहयासि स्थापयामि नमः ।।

पाद्यादि से पूजन कराकर ।। ।। प्रार्थना ।।

ॐ नमो देवगणेशाय नमस्ते विघ्ननाशन ।। नमो मूषक-मारूढ़ शुभकर्त्रे नमोनमः ।। नमः कात्यायनीपुत्र नमः परशु-पाणये ।। रवेरुदयतेरूपं विद्याबुद्धि विचक्षण ।। देहि मे रूप सौभाग्यं देहि मे पुत्रसम्पदः ।। इच्छासिद्धिप्रदो देव यथोक्तभव मे सदा ।। अनया पूजया सांगाः सपरिवाराः वक्रादि १२ गणपाः प्रीणन्तु नमम ।।

अथ नैर्ऋत्यकोण में वास्तु पूजन कराना ।।

ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभवानः यत्वेमहेप्रतितन्नोयुषस्वशन्नोभवद्विपदे शंचतुष्पदे ।। ॐ भूर्भुवः स्वः वास्तुपुरुष इहागच्छ इहतिष्ठ वास्तु पुरुषाय नमः ।। वास्तु-पुरुषमावाहयामि स्थापयामि नमः ।।

पाद्यादि से पूजन कराकर प्रार्थना ।।

नागपृष्ठसमारूढं शूलहस्तं महाबलम् ।। पाताल नायकंदेवं वास्तुदेवं नमाम्यहम् ।। अनयापूजया सांगः सपरिवारः वास्तुदेवः प्रीणातु नमम ।।

अथ वायव्यकोण में दिव्यादि ६४ योगिनी का पूजन कराना ।।

ॐ जातवेदसेसुनवाम सो ममरातीयतोनिदहातिवेदः सनः पर्षदति दुर्गाणिविश्वानावेवसिन्धुन्दुरितात्यग्निः ।। ॐ भूर्भुवः स्वःदिव्यादि ६४ योगिन्य इहागच्छत इहतिष्ठत ।। दिव्यादि ६४ योगिनीभ्यो नमः ।। दिव्यादि ६४ योगिनीः आवाहयामि स्थापयामि नमः ।।



पाद्यादि से पूजन कराकर प्रार्थना ॥

ॐ जयादिसर्वायोगिन्यः दुर्गारूपाश्चताःस्मृता पूजयाबलिदानेनसन्तुष्टास्संतु मे सदा ॥ अनया पूजया सांगाःसपरिवाराः दिव्यादिचतुष्षष्ठियोगिन्यः प्रीणन्तु नमम ॥

अथ वायव्यकोण में योगिनी के समीप अजरादि ५० क्षेत्रपाल का पूजन कराना ॥

ॐ अजारेपि शंगिलास्वावित्कुरुपिशंगिलाशसआस्कन्दमारेशसत्याहिपन्थांविसर्पति ॥ ॐ भूर्भुवः स्वः अजरादि पंचाशत्क्षेत्रपाइहागच्छत इहतिष्ठत अजरादिक्षेत्रपेभ्योनमः अजरादिक्षेत्रपान्आवाहयामिस्थापयामि नमः ॥

पाद्यादि से पूजन कराकर प्रार्थना ॥

ॐ क्षेत्रपालान्नमस्यामिसर्वारिष्टनिषूदनान् ॥ अस्ययागस्यसिध्यर्थं पूजयाराधितान् मया ॥ अनया पूजयासांगाःसपरिवाराः अजरादिपंचाशत्क्षेत्रपाः प्रीणन्तु नमम् ॥

उत्तर दिशा में अथ षोड़षमातृ का पूजन कराना ॥

ॐ गौरीर्मिमायसलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी अष्टापदी नवपदी बभूवुशी सहस्राक्षरापरमेव्योमन् ॥ ॐ भूर्भुवः स्वः गौर्यादिषोडशमातर इहागच्छत इहतिष्ठत ॥ गौर्यादि १६ मातृभ्योनमः ॥ गौर्यादिमातृः आवाहयामिस्थापयामि नमः ॥

पाद्यादि से पूजन कराकर—प्रार्थना ॥

ॐ गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातरोलोकमातरः ॥ हृष्टिःपुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ॥ गणेशेनाधिकाह्येता वृद्धौपूज्याश्चषोड़श ॥ अनयापूजया साँगाः सपरिवाराः गौर्यादि १६ मातरः प्रीणन्तु नमम ॥

वसोद्धारापू० ॥ वसोः पवित्रमसि० ॥ गंधादिभिः संपूज्य ॥ श्रीर्लक्ष्मीर्धृतिर्मेधा श्रद्धा प्रज्ञासरस्वती ॥ घृतेन पूजितास्सर्वा



सप्तैता घृत मातरः ॥ वसोर्द्धारे महामाये चामुण्डे मुण्ड मालिनि ॥
शीघ्रं ममवरंदेहि परांगति नमोस्तुते ॥

सांकल्पिक नान्दी श्राद्धः दक्षिणोत्तर क्रमेण ॥

देशकालौ संकीर्त्य अद्यदुर्गाहवनाङ्गत्वेन सांकल्पिक विधिना ब्राह्मणयुग्म भोजन पर्याप्तान्ननिष्क्रयी भूत यथाशक्ति हिरण्ययेन नांदी श्राद्धं करिष्ये ॥ ॐ सत्य वसु संज्ञकाः विश्वेदेवाः नान्दी-मुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनं पादप्रक्षालनं वृद्धिः ॥ अमुक गोत्राः ततः अस्मन्मातृ पितामही प्रपितामह्यः नांदीमुख्यः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद-प्रक्षालनं वृद्धिः ॥ अमुक गोत्रास्मत्पितृ पितामह प्रपितामहाः नान्दी मुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद-प्रक्षालनं वृद्धिः ॥ द्वितीय गोत्रा अस्मन्मातामह प्रमातामह वृद्ध प्रमातामहाः सपत्नीकाः नांदीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यंपादावनेजनं पादप्रक्षालनं वृद्धिः ॥ अथ आसनदानम् ॥ ॐ सत्यवसु संज्ञकानां विश्वेषां देवानां नान्दीमुखानां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः ॥ इति कुशत्रयं सर्वतो दक्षिण गतं पूर्वाग्रमुत्सृजेत् एवं सर्वत्र ॥ ॐ नांदी श्राद्धे क्षणौ क्रियेताम् ॥ ॐ तथाप्राप्नुतां भवन्तौ प्राप्नुवाव ॥ ॐ अमुक गोत्रणां अस्म-न्मातृपितामही प्रपिता महीनां नान्दीमुखीनां ॐ भूर्भुवः स्वः इदमासनं सुखासनंस्वाहानमः ॥ ॐ नान्दी श्राद्धे क्षणौ क्रिये-ताम् ॥ तथा प्राप्नुतां भवन्तौ प्राप्नुवाव ॥ ॐ अमुक गोत्राणां अस्मत्पितृ पितामह प्रपितामहानां नान्दीमुखानां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः ॥ ॐ नान्दी श्राद्धे क्षणौ क्रिये-ताम् ॥ ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवाव ॥ अमुक गोत्राणां अस्मन्मातामह प्रमातामह वृद्धप्रमातामहानां सपत्नीकानां नान्दी

मुखानां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः ।। नांदी श्राद्धे क्षणौ क्रियेताम् ।। ॐ तथाप्राप्नुतां भवन्तौ प्राप्नुवाव ।। ततो गंधादि दानम् ।। ॐ सत्यवसु संज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्यो ॐ भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा संपद्यताम् वृद्धिः ।। अमुक गोत्राभ्योऽस्मन्मातृ पितामही प्रपितामहीभ्यो नान्दीमुखीभ्यो ॐ भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ।। अमुक गोत्रेभ्योऽस्मत्पितृ पितामह प्रपितामहेभ्योनांदी-मुखेभ्यो ॐ भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ।। द्वितीय गोत्रेभ्योऽस्मन्मातामह प्रमातामह वृद्ध प्रमातामहेभ्यः सपत्नीकेभ्यः नांदीमुखेभ्यः ॐ भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा संपद्यताम्वृद्धिः ।। ततो भोजन निष्क्रय द्रव्य दानम् ।। ॐ अद्य तत्सन्मात्रादित्रयपित्रादित्रय मातामहादित्रय नांदीश्राद्ध संबंधिनः सत्यवसुसंज्ञकाः विश्वेदेवाः नांदी मुखाः ॐ भूर्भुवः स्वः इदं वः युग्मब्राह्मण भोजन पर्याप्तंदास्यमानमन्नं वा तन्निष्क्रयी भूतं किंचिद्धिरण्यं अमृतरूपेण दत्तं स्वाहा संपद्यतां वृद्धिः ।। ॐ अद्यतत्सदमुक गोत्राः मातृ पितामही प्रपितामह्यो नांदी मुख्यः ॐ भूर्भुवः स्वः इदं वो युग्म ब्राह्मण भोजन पर्याप्तं दास्यमानमन्नं वा तन्निष्क्रयी भूतं किंचिद्धिरण्यं अमृत रूपेण स्वाहा संपद्यतां वृद्धिः ।। अमुक गोत्राः पितृ पितामह प्रपितामहाः नांदी मुखाः ॐ भूर्भुवः स्वः इदं वो युग्म ब्राह्मण भोजन पर्याप्तं दास्यमान मन्नं वा तन्निष्क्रयीं भूतं किंचिद्धिरण्यं अमृत रूपेण स्वाहा संपद्यतां वृद्धिः ।। अमुक गोत्राः मातामह प्रमातामह वृद्ध प्रमाता-महाः सपत्नीकाः नांदी मुखाः ॐ भूर्भुवः स्वः इदं वो युग्म ब्राह्मण भोजनपर्याप्तं दास्यमान मन्नं वा तन्निष्क्रियीभूतं किंचि-द्धिरण्यं अमृत रूपेण स्वाहा संपद्यतां वृद्धिः ।। सक्षीर मुदकदानम् ।।

ॐ सत्य वसु संज्ञका विश्वेदेवाः नांदीमुखाः प्रीयंताम् ।। अमुक गोत्राःमातृ पितामही प्रपितामह्यो नांदीमुख्यः गोत्राः पितृ पिता-मह प्रपितामहाः नांदी मुखाः द्वितीय गोत्राः मातामह प्रमातामह वृद्धप्रमातामहाः नांदीमुखाः सपत्नीकाश्च प्रीयन्ताम् ।। ततः ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः० इति मन्त्रं पठेत् ।।अथ दक्षिणादानम् ।। ॐ सत्यवसु संज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दी मुखेभ्यः कृतस्य नांदीश्राद्धस्यफल प्रतिष्ठा सिद्ध्यर्थं द्राक्षामलक यवमूल निष्क्रयी भूतां दक्षिणां दातु महमुत्सृजे ।। ॐ अमुक गोत्राभ्यो मातृ पितामही प्रपितामहीभ्यो नान्दी मुखीभ्यः कृतस्य० ।। ॐ अमुक गोत्रेभ्यः पितृ पितामह प्रपितामहेभ्यो नान्दी मुखेभ्यः कृतस्य० ।। ॐ अमुक गोत्रेभ्यो मातामह प्रमातामह वृद्धप्रमाता-महेभ्यः सपत्नीके० ना० कृतस्य० ।। आशिषोग्रहणम् ।। गोत्रंनो वर्द्धताम् ।। वर्द्धतांवोगोत्रम् ।। दातागेनोऽभि वर्द्धताम् ।। अभि-वर्द्धताम्वोदातारः ।। वेदाश्चनोऽभिवर्द्धताम् ।। अभिवर्द्धताम्वो-वेदाः ।। संततिर्नोवर्द्धताम् ।। वर्द्धताम्वः संतति ।। श्रद्धा च नोमा-व्यगमत् ।। माव्यगमद्धः श्रद्धा ।। वहुदेयंचनोऽस्तु ।। अस्तुवो वहुदेयम् ।। याचितारश्चनः सन्तु ।। सन्तु वो याचितारः ।। एता आशिषाः सत्यासन्तु ।। सन्त्वेतास्सत्याशिषाः ।। ॐ माता पितामही चैव तथैव प्रपितामही ।। पिता पितामहश्चैव तथैव प्रपितामहः ।। १ ।। मातामहस्तत्पिता च प्रमातामहकादयः ।। एतेभवन्तु सुप्रीताः प्रयच्छन्तु च मङ्गलम् ।। २ ।। अस्मिन्नांदी-श्राद्धे न्यूनातिरिक्तोयोविधिः स उपविष्ट ब्राह्मणानां वचनात् नान्दी मुखप्रसादात् सर्वः परिपूर्णोस्तु अस्तु परिपूर्ण इति विप्राः ।। इति सांकल्पिक नान्दी श्राद्ध प्रयोगः ।।

ॐ अद्येत्यादि पूर्ववत् अमुकगोत्र अमुक शर्माहं अस्मिन्दुर्गा

हवन कर्मणि अमुक गोत्रं अमुक नाम शर्माणं ब्राह्मणं एभिर्वरण द्रव्यैः आचार्यत्वेन त्वामहं वृणे ।। वृतोस्मीति आचार्यः ।। बृहस्पते ऽअतीमंत्रेणइतिपूजनम् ।। पादप्रक्षालनं ।। ॐ यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठ पुष्करे ।। तत्फलंपांडव श्रेष्ठ विप्राणां पाद शौचने ।। गंधं ।। गंध द्वारांदुराधर्षां नित्य पुष्टां करीषिणीम् ।। ईश्वरीं सर्वभूतानां तामिहो पह्वयेश्रियम् ।। अक्षतान् ।। पुष्प माल्याम् ।। श्री श्चतेति ।। कंकण बंधनम् ।।व्रतेन दीक्षामाप्नोति ।। प्रार्थना ।। आचार्यस्तुयथास्वर्गे शक्रादीनां बृहस्पतिः ।। तथात्वं ममयज्ञे स्मिनाचार्यस्तु भवप्रभो ।। यथाविहितं कर्मकुरु ।। यथा-ज्ञानतः करवाणीति ।। एवं ब्रह्मा वरणम् ।। प्रार्थना ।। यथा चतुर्मुखो ब्रह्मासर्व वेदधर प्रभो ।। तथात्वंममयज्ञेस्मिन्ब्रह्मा भव-द्विजोत्तम ।। ब्रह्मयज्ञान मंत्रेण पूजनम् ।। सर्वपूर्ववत् ।।

रक्षा विधानम् ।।

यवान्कुशान्तथा दूर्वा दक्षिणाक्षत सर्षपान् ।। गोमयं दधि संयुक्तं कारयेचाम्रभाजने ।। १ ।। नमस्ते शारदादेवी काश्मीर प्रतिवासिनी ।। अहं शरणमाप्नोमि विद्यादानं ददासि मे ।। २ ।। ॐ गणाधिपं नमस्कृत्य नमस्कृत्यपितामहं ।। विष्णुंरुद्रंश्रियं देवीं वंदे भक्त्या सरस्वतीम् ।। स्थानं क्षेत्रं नमस्कृत्य दिननाथं निशाकरं ।। धरणी गर्भ संभूतंशशिपुत्रंबृहस्पतिं ।। दैत्याचार्यं नमस्कृत्य सूर्यपुत्रंमहाग्रहं ।। राहुंकेतुं नमस्कृत्य यज्ञारम्भे विशे-षतः ।। शक्राद्याः देवताः सर्वे मुनीनां कथयाम्यहं ।। गर्गमुनिं-नमस्कृत्य नारदोपि महामुनिः ।। वसिष्ठं मुनि शार्दूलं विश्वामित्रो महामुनिः ।। व्यासं कविं नमस्कृत्य सर्वशास्त्र विशारदाः ।। विद्याधिकास्तु मुनयः आचार्यास्तु तपोधनाः ।। सर्वेतेप्रणिपत्येन यज्ञरक्षां करोतु मे ।। रक्षो हणं वलगहनं वैष्णवीमिद महन्तंवलग-

मुत्किरामि यम्मेनिष्ट्यो यममात्यो निचखानेद महन्तं वलग मुत्किरामि यम्मे समानोयम समानोनि च खानेद महन्तं वलग मुत्किरामियम्मे सबंधुर्यमसबंधुर्नि च खानेद महन्तंवलगमुत्किरा-मियम्मे सजातो यम सजातो निचखानोत्कृत्याङ्किरामि ।। १।।
रक्षोहणो वोव्वलगहनः प्रोक्षामि वैष्णवान्नूचो हणो वोव्वल गहनोवनयामि वैष्णवान्नूक्षोहणो वोवल गहनो वस्तृणामि वैष्णवान्नूक्षाहणोवांवलगहनाऽउपदधामि वैष्णवी रक्षोहणो वांव लगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवास्थ ।। २।।
रक्षसां भागोसि निरस्तठं० रक्षऽइदमहठं० रक्षोभितिष्ठामीदमहठं० रक्षोवबाधऽइदमहठं० रक्षोधमन्तमोनयामि ।। घृतेनद्यावा पृथिवी प्रोर्णु वाथांवायोव्वेस्तोकानामग्नि राज्यस्य वेतु स्वाहा स्वाहा कृते-ऽऊर्ध्व नभसम्मारुतंगच्छतम् ।। ३।। रक्षोहाविश्व चर्षणिरभि-योनि मयोहते।। द्रोणेसधस्थमासदत् ।। ४ ।।।पूर्वेरक्षतुगोविन्द आग्नेयां गरुडध्वजः ।। याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते।। केशवो वारुणीं रक्षेद्वायव्यां मधुसूदनः ।। उत्तरे श्रीधरोरक्षेदीशा-न्ये च गदाधरः ।। ऊर्ध्वंगोवर्द्धनोरक्षेदधश्चैवजनार्दनः ।। एवंदश-दिशोरक्षेद्वासुदेवो जनार्दनः ।। यज्ञाग्रेरक्षते शंखः पृष्ठे पद्मं च उत्तमं ।। वामपार्श्वेगदारक्षे द्दक्षिणे च सुदर्शनः ।। उपेंद्रो रक्षतेब्रह्मा आचार्यपातुवामनः ।। अच्युतः पातु ऋग्वेदं यजुर्वेदमधोक्षजः ।। कृष्णो रक्षतु सामं च अथर्वाणं च माधवः ।। उपद्रष्टास्तु ये विप्रा-स्तेपिरुद्रेण रक्षिताः ।।यजमानं सपत्नीकं पुँडरीकाक्ष रक्षतु ।। रक्षा-हीनं तु यत्स्थानं तत्सर्वं रक्षतो हरिः ।। वेद मंत्रैश्च कर्तव्या रक्षा शुभ्रैश्च सर्षपैः ।। तस्मात्सर्वं प्रयत्नेन रक्षां कुर्यात्सदा बुधः ।।

।। अथ यजमान हस्ते रक्षाबन्धनम् ।।

ॐ त्वंयविप्रदाशुषोनॄःपाहि शृणुधीगिरः ।। रक्षातोकमु-



तत्कमना ॥ येन बद्धोवली राजादानवेन्द्रो महाबलः॥ तेनत्वां प्रतिबध्नामि रक्षेमाचलमाचल ॥ इति रक्षा बिधानं ॥

॥ अथ पुण्याहवाचनं ॥

कलश स्थापनानन्तर वरुणं साङ्गं पूजयित्वा पुण्याहवाचनं कुर्यात् ॥ संपूज्यगंधमाल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत् ॥ धर्म्म कर्मणिमांगल्येसंग्रामेऽद्भुतदर्शने ॥१॥ पुण्याहवाचनंदैवंब्राह्मणस्यविधीयते ॥ एतदेवनिरोंकारंकुर्यात्क्षत्रियवैश्ययोः ॥ २ ॥ अवनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिं शिरस्याधाय दक्षिणेनपाणिना सुवर्णपूर्णकलशं धारयित्वा दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच ॥ तेनायुः प्रमाणेनपुण्याहंदीर्घमायुरस्तु ॥ अपां मध्येस्थितादेवाः सर्वमप्सुप्रतिष्ठितम् ॥ ब्राह्मणानां करेन्यस्ताः शिवाआपोभवंतुवाः ॥१॥ शिवाआपः संतु ॥ अस्तु शिवा आपः ॥ लक्ष्मीर्वसतिपुष्पेषुलक्ष्मीर्वसतिपुष्करे ॥ सा मे वसतुवैनित्यंसौमनस्यंतथास्तुनः ॥१॥ सौमनस्यमस्तु ॥ अस्तु सौमनस्यम् ॥ अक्षतंचास्तुमेपुण्यं दीर्घमायुर्यशोवलम् ॥ यद्यच्छ्रेयस्करं लोकेतत्तदस्तुसदामम ॥१॥ अक्षतं चारिष्टं चास्तु ॥ अस्त्वक्षतमरिष्टम् ॥ ब्राह्मणानांहस्तेगंधादिदत्वा ॥ गंधः प्रदेयोदेवानामपत्यपुष्टिदश्चनः ॥ गंधद्वारांदुराधर्षामितिमंत्रेणभक्तितः ॥१॥ गंधाः पांतुसौमंगल्यंचास्तु ॥ अस्तु सौमङ्गल्यम् ॥ पुष्पाणिपान्तु सौश्रेयसमस्तु ॥ अस्तुसौश्रेयम् ॥ अक्षताःपांतुआयुष्यमस्तु ॥ अस्तु आयुष्यम् ॥ तांबूलानिपांतु ऐश्वर्यमस्तु ॥ अस्तु ऐश्वर्यम् ॥ दक्षिणाः पांतुआरोग्यमस्तु ॥ अस्तु आरोग्यम् ॥ दीर्घमायुः श्रेयः शांतिः पुष्टिस्तुष्टिश्चास्तु, अस्तु ॥ श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचारोग्यंचायुष्यंचास्तु, अस्तु ॥ यंकृत्वासर्ववेद यज्ञक्रियाकरणकर्म्मारंभाः शुभाः शोभनाः प्रवर्तंते तमहमोंकारमा-

दिकृत्वाऋग्यजुः सामाथर्वाशीर्वचनं बहुऋषिसंमतं समनुज्ञातंभवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये ॥ वाच्यताम् ॥ यजुः ॥ द्रविणोदाः पिपीषति जुहोतप्रचतिष्ठत ॥ नेष्ट्रादृतुभिरिष्यत ॥यजुः॥ सवितात्वासवानाᳬ सुवतामग्निगृहपतीनाᳬसोमोव्वनस्पतीनाम्॥ बृहस्पतिर्व्वाचऽइन्द्रोज्यैष्ठ्यायरुद्रः पशुभ्यो मित्रः सत्योव्वरुणो धर्मपतीनाम् ॥ १ ॥ यजुः ॥ ॐ नतद्रक्षाᳬसिनापिशाचास्तरंतिदेवानामोजः प्रथमजᳬ ह्येतत् ॥ योबिभर्तिदाक्षायणᳬ हिरण्यᳬ सदेवेषुकृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ॥ १ ॥ यजुः ॥ उच्चातेजातमन्धसोदिविसद्भूम्याददे ॥ उग्रᳬ शर्म्ममहिश्रवः ॥४॥ इत्येताऋचः पुण्याहेब्रूयात् ॥ व्रतनियम तपः स्वाध्याय क्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानांमनः समाधीयताम् ॥ समाहित मनसः स्मः ॥ प्रसीदन्तु भवन्तः प्रसन्नाः स्मः ॥ अथ पूर्वस्थापितकलशात्ताम्रपात्रे जलमादाय यजमानमूर्धनिदूर्वयासेचनं कुर्यात् ॥ शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु ऋद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु शिवमस्तु शिवं कर्म्मास्तु कर्म्मसमृद्धिरस्तु धर्मसमृद्धिरस्तु वेदसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसंपदस्तु अनिष्टनिरसनमस्तु ॥ भूमौ ॥ यत्पापंरोगमशुभमकल्याणंतद्दूरेप्रतिहतमस्तु ॥ पात्रे ॥ यच्छ्रेयस्तत्तदस्तु उत्तरेकर्मणिनिर्विघ्नमस्तु ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंतां ॥ तिथिकरणमुहूर्त्तनक्षत्र ग्रहलग्नसंपदस्तु तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् ॥ तिथिकरणेसमुहूर्त्ते सनक्षत्रे सग्रहेसलग्ने सदैवते प्रीयेतां ॥ दुर्गापांचाल्यौ प्रीयेताम् ॥ अग्निपुरोगाविश्वेदेवाः प्रीयन्ताम् ॥ इन्द्रपुरोगामरुद्गणाः प्रीयंताम् ॥ वशिष्ठपुरोगाऋषिगणाःप्रीयंताम् ॥ माहेश्वरीपुरोगाउमामातरः प्रीयंताम् ॥

अरुन्धतीपुरोगाएकपत्न्यः प्रीयंताम् ॥ विष्णुपुरोगाः सर्वेदेवाः प्रीयंताम् ॥ ब्रह्मपुरोगाः सर्वेवेदाः प्रीयंताम् ॥ आदित्य पुरोगाः सर्वेग्रहाःप्रीयंतां॥ब्रह्मचब्राह्मणाश्चप्रीयंताम्॥अंबिकासरस्वत्यौप्रीयेताम्॥श्रद्धामेधेप्रीयेताम्॥भगवतीकात्यायनीप्रीयताम्॥ भगवतीमाहेश्वरीप्रीयताम्॥ भगवतीऋद्धिकरीप्रीयताम् ॥ भगवती वृद्धिकरीप्रीयताम् ॥ भगवतीसिद्धिकरीप्रीयताम् ॥ भगवती पुष्टिकरी प्रीयताम् ॥ भगवतीतुष्टिकरीप्रीयताम् ॥ भगवंतौ विघ्नविनायकौ प्रीयेताम्॥सर्वाः कुलदेवताः प्रीयंताम् ॥सर्वाः ग्रामदेवताः प्रीयंतां॥ सर्वा इष्टदेवताः प्रीयंताम् ॥ भूमौ ॥ हताश्चब्रह्मद्विषः ॥ हताः परिपंथिनः॥ हताश्चविघ्नकर्तारः॥ शत्रवःपराभवंयान्तु॥ शाम्यंतुघोराणि॥शाम्यंतुपापानि॥ शाम्यंत्वीतयः॥पात्रे॥ शुभानिवर्धंतां॥शिवा आपःसंतु ॥ शिवाऋतवःसन्तु ॥ शिवाअग्नयःसंतु ॥ शिवाआहुतयःसंतु ॥ शिवाओषधयःसंतु ॥ शिवावनस्पतयःसंतु ॥ शिवा अतिथयःसंतु॥ अहोरात्रेशिवेस्याताम्॥ यजुःशाखिनांमंत्रः ॥ ॐ निकामेनिकामेनः पर्जन्योवर्षतु फलवत्यौनऽओषधयः पच्यंतां योगक्षेमोनः कल्पताम् ॥ ६ ॥ पूर्वपात्रे जलं क्षिपेत् ॥ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतु सोमसहिता आदित्यपुरोगाः सर्वेग्रहाः प्रीयंताम् ॥ भगवान्नारायणः प्रीयताम् ॥ भगवान्स्वामी महासेनःप्रीयताम्॥पुरोनुवाक्यायायत्पुण्यंतदस्तु॥ याज्ययायत्पुण्यं तदस्तु ॥ वषट्कारेणयत्पुण्यंतदस्तु॥ प्रातःसूर्योदयेयत्पुण्यंतदस्तु॥ एतत्कल्याणयुक्तं पुण्यमस्तु ॥ पुण्याहकालान्वाचयिष्ये ॥ वाच्यताम् ॥ ब्राह्मंपुण्यमहर्यच्चसृष्ट्युत्पादनकारकम् ॥ वेदवृक्षोद्भवं नित्यंतत्पुण्याहंब्रुवंतुनः ॥ १ ॥ भोब्राह्मणाः ममसकुटुम्बस्य सपरिवारस्यगृहेपुण्याहंभवंतोब्रुवन्तु ॥ २ ॥ ॐ पुण्याहम् ३ ॥ यजुः ॥ ॐ पुनंतुमादेवजनाः पुनंतुमनसाधियः ॥ पुनंतुविश्वा-

भूतानिजातवेदः पुनीहिमा ॥७॥ पृथिव्यामुद्धृतायांतुयत्कल्याणं पुराकृतम् ॥ ऋषिभिः सिद्धगंधर्वैस्तत्कल्याणंब्रुवंतु नः ॥ १ ॥ भोब्राह्मणाः ममसकुटुम्बस्यसपरिवारस्यगृहेकल्याणंभवंतोब्रुवंतु ॥ ३ ॥ ॐ कल्याणम् ॥ ३ ॥ यजुः ॥ ॐ यथेमांवाचंकल्याणी मावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्यांशूद्रायचार्य्याय च स्वाय-चारणायच ॥ प्रियोदेवानांदक्षिणायैदातुरिहभूया समयम्मेकामः समृद्धयतामुपमादोनमतु ॥ ८ ॥ सागरस्यतुयाऋद्धिर्महालक्ष्म्या-दिभिःकृता ॥ संपूर्णासुप्रभावाचतांतामृद्धिंब्रुवंतुनः ॥ १ ॥ भो ब्राह्मणाः ममसकुटुम्बस्यसपरिवारस्यगृहेऋद्धिंभवंतोब्रुवंतु ॥ ३ ॥ ॐ ऋद्धयताम् ॥ ३ ॥ यजुः ॥ ॐ सत्रस्यऽऋद्धिरस्यगन्मज्यो-तिरमृताऽअभूम ॥ दिवंपृथिव्याऽअद्ध्यारुहामाविदामदेवान्त्स्व-र्ज्योतिः ॥ ९ ॥ स्वस्तिस्तुयाऽविनाशाख्यापुण्यकल्याणवृद्धिदा ॥ विनायकप्रियानित्यंतांतांस्वस्तिंब्रुवंतुनः ॥ १ ॥ भोब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्यगृहेस्वस्तिंभवंतोब्रुवंतु ॥ ३ ॥ ॐस्वस्ति ॥ ३ ॥ यजुः ॥ ॐस्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषाविश्व-वेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्द-धातु ॥१०॥ मृकंडसूनोराहुर्यद्भृगुवलोमशयोस्तथा ॥ आयुषातेन-संयुक्ताजीवेमशरदःशतम् ॥ १ ॥ जीवंतुभवंतः ॥३॥ यजुः॥ ॐ शतमिन्नुशरदोऽअंतिदेवायत्रानश्चक्राजरं संतनूनाम् ॥ पुत्रासो यत्र पितरोभवंति मानोमध्यारीरिषतायुर्गंतोः ॥११॥ शिवगौरी-विवाहेयायाश्रीरामेनृपात्मजे ॥ धनदस्यगृहेयाश्रीरस्माकंसास्तु-सद्मनि ॥ १ ॥ भोब्राह्मणाः मम सकुटुम्बस्यसपरिवारस्यगृहेश्री रस्तुइतिभवंतोब्रुवंतु ॥ ३ ॥ ॐ अस्तु श्रीः ॥ ३ ॥ यजुः ॥ ॐ मनसःकाममाकूतिंवाचः सत्यमशीमहि ॥ पशूनाꣳरूपमन्नस्य रसोयशः श्रीः श्रयताम्मयिस्वाहा ॥ २ ॥ प्रजापतिर्लोकपालो-

धाताब्रह्मामदेवराट् ॥ भगवाञ्छाश्वतोनित्यंसनोरक्षतुसर्वतः ॥ १ ॥ भगवान्प्रजापतिः प्रीयताम् ॥ यजुः ॥ ॐ प्रजापतेनत्वदेता-न्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्ते जुहुमस्तन्नोऽअ-स्त्वयममुष्य पितामावस्यपितावयठं०स्यामपतयो रयीणाठ्ठ स्वाहा ॥१३॥ आयुष्मतेस्वस्तिमतेयजमानायसंततम् ॥ कृताः सर्वाशिषः-संतुऋत्विग्भिर्वेदपारगैः ॥ १ ॥ देवेन्द्रस्ययथास्वस्तियथास्वस्ति गुरोर्गृहे ॥ एकलिंगेयथास्वस्तितथास्वस्तिसदामम ॥ २ ॥ ॐ आयुष्मतेस्वस्ति ॥३॥यजुः॥ ॐ प्रतिपन्थामपद्महिस्वस्तिगामनेह सम् ॥ येनविश्वाःपरिद्विषोवृणक्ति विन्दतेवसु ॥१४॥ यजुः ॥ ॐ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नऽआसुव॥मंत्रार्थाः सफलाःसन्तुपूर्णाः सन्तुमनोरथाः ॥ शत्रूणांबुद्धि नाशोऽस्तुमित्रा-णामुदयोऽस्तु नः॥१॥ ऋग्वेदोऽथयजुर्वेदःसामवेदोह्यथर्वणः॥ब्रह्म-वक्त्रेस्थितानित्यंनिघ्नंतुतवशात्रवान् ॥ २ ॥ अक्षतान्विप्रहस्तात्तु-नित्यंगृह्णन्ति ये नराः ॥ चत्वारितेषांवर्धंतेआयुः कीर्तिर्यशोबलम् ॥ ३ ॥ आयुष्कामो यशस्कामो पुत्र पौत्रस्तथैव च ॥ आरोग्यं धनकामश्च सर्वेकामाः भवन्तु मे ( ते ) ॥४॥श्रीर्वर्चस्व मायुष्य मारोग्य माविधात्पवमानम्महीयते ॥ धान्यं धनं पशुं बहुपुत्र लाभं शत सम्वत्सरं दीर्घमायुः ॥ १५ ॥ स्वस्त्यस्तु ते कुशल-मस्तु चिरायुरस्तु गोवाजिवृद्धि धनधान्य समृद्धिरस्तु ॥ ऐश्वर्य-मस्तु कुशलोस्तुरिपुक्षयोस्तु सन्तानवृद्धि सहिता हरिभक्तिरस्तु ॥ ६ ॥ आनन्द काले स्थिर राज्य लक्ष्मीः शिवप्रसादाद्बहुवाक्य सिद्धिः ॥ वाचाकृतं शत्रुविनाशनं च दकारशब्दन्तु दरिद्र-नाशः ॥ ७ ॥ इति दानखण्डोक्त पुण्याह वाचनम् सम्पूर्णम् ॥

पंच भू संस्कार करके अग्नि स्थापन कराकर ईशानकोण में वरुण पूजन करना ॥

ॐ इमम्मेवरुणश्रुधीहवमद्या च मृडय । त्वामवस्युराचके ॥

ॐ भूर्भुवः स्वः वरुण इहागच्छ इहतिष्ठ वरुणाय नमः ॥

वरुणमावाहयामि स्थापयामि नमः ॥

पाद्यादि से पूजन कराकर—प्रार्थना ॥

ॐ नागपाशधरं देवं वरुणं नक्रवाहनम् ॥ शुद्धस्फटिक-संकाशं प्राणरूपं नमाम्यहम् ॥ पाशहस्तं च वरुणमम्भसाँ प्रतिमीश्वरम् ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रति गृह्यताम् ॥ अनयापूजया साँगः सपरिवारः वरुणदेवः प्रीणातु नमम ॥

अथ ईशानकोण में सूर्यादिनवग्रह पूजन कराना ॥

ॐ आकृष्णेनरजसावर्तमानो निवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेन देवो यातिभुवनानिपश्यन् ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहाः इहागच्छत इहतिष्ठत सूर्यादिनवग्रहेभ्यो नमः ॥ सूर्यादिनवग्रहानावाहयामिस्थापयामि नमः ॥

पाद्यादि से पूजन कराकर—प्रार्थना ॥

ॐ ब्रह्मामुरारिस्त्रिपुरान्तकारी भानुः शशीभूमिसुतोबुधश्च ॥ गुरुश्चशुक्रश्शनिराहु—केतवःसर्वेग्रहाः शान्तिकराभवन्तु ॥ ॐ अधिदेवताभ्यो नमः ॥ ॐ शिवोगौरीतथास्कन्दो विष्णु ब्रह्मा-पुरन्दरः ॥ यमःकालश्चित्रगुप्तश्चाधिदेवा इमे स्मृताः ॥ ॐ प्रत्यधिदेवताभ्यो नमः ॐ अग्निरापोमहीविष्णुरिन्द्ररिन्द्राणिका तथा ॥ प्रजापतिर्भुजंगश्च ब्रह्माप्रत्यधिदेवताः ॐ गणेशादिपंच-लोकपालेभ्यो नमः ॥ ॐ विनायकस्तथा दुर्गा वायुराकाशमेव च ॥ अश्विनौचैवपंचैतांल्लोकपालान्नमाम्यहम् ॥ ॐ इन्द्रादि-दशदिग्पालेभ्यो नमः ॥ ॐ इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ कुवेर ईशो ब्रह्मा च अनन्तश्च दिगीश्वराः ॥ अनया-पूजया सांगाः सपरिवाराः सूर्यादयः प्रीणन्तु नमम ॥

## अथ प्रधान कलशस्थापनम्

॥ अथ भूमिस्पर्शनम् ॥

ॐ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥

पृथिवींयच्छपृथिवींन्दृंह० हपृथिवींमाहिंह० सीः ॥ अथवा ॥ महीद्यौः पृथिवि चनऽइमंयज्ञंमिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ इतिभूमिंस्पृष्ट्वा ॥

अथ मृत्तिका की वेदी में जौ या गैहूँ मिलावे *

ॐ धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्रसिति मायुषेधान्देवोवः—सविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनां पयोसि ॥ अथवा ॐ ओषधयःसंवदन्तेसोमेनसहराज्ञायस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥ इतियवान्गोधूमान्वा प्रक्षिपेत् ॥

॥ अथ कलश रखना ॥

ॐ आजिघ्रकलशंमह्यात्वाविशंत्विन्दवः पुनरूर्जानिवर्तस्वसानः ॥ सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥२॥ आकलशेषुधावतिपवित्रपरिषिच्यते ॥ उक्थैर्यज्ञेषुवर्द्धते ॥ इतिकलशंसंस्थाप्य ॥

अथ कलश मे जल गेरना ॥

ॐ वरुणस्योत्तंमनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद॥ इति जलप्रक्षेपः ॥

अथ कलश में तीर्थजल, गंगाजल या जमना जल गेरना ॥

---

तन्त्रान्तरे, कामनाभेदेन कलशे विशेष वस्तु ॥ धर्म्मकामः क्षिपेद्भस्म धन कामस्तुमौक्तिकम् ॥ श्री कामः कमलं दद्यात्कामार्थी रोचनं तथा ॥ १ ॥ मोक्षकामो न्यसेद्दस्त्रंजयकामोपराजिताम् ॥ उच्चाटनार्थं-व्याघ्रीं च वश्यार्थंशिखिमूलिकाम ॥ २ ॥ मारणाय मरीचञ्च कैतवं मोहनायच ॥ आकर्षणाय पारन्तीं प्रक्षिपेत्कलशोदरे ॥ ३ ॥ इति कार्यानुसारेणैतानि कलशे क्षिपेत् ॥ अपराजिता बड़ी खिरैटी प्रसिद्धा ॥ व्याघ्री छोटी कटेरी ॥ शिखिमूलिका मोरपंखी ॥ कैतवं धत्तूरम् ॥

* यवान्वै वापयेत्तत्र गोधूमैश्चापि संयुतान् ॥ तत्र संस्थापयेत् कुम्भं विधिना मन्त्रपूर्वकम् ॥

## दुर्गार्चन मृतौ, महिष-मर्दिनी संख्या १




दुर्गादत्त भक्त

ॐ जटाजूट समायुक्तामर्द्धेन्दु कृत लक्षणाम् ॥
लोचनत्रय संयुक्ताम्पद्मेन्दु सदृशाननाम् ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ॥
नवयौवनसंपन्नां सर्वाभरण भूषितामित्यादि ॥ १ ॥

ॐ इमम्मेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमेसचतापरुष्ण्यामरुद्-वृधेवितस्तयार्जीकीयेश्रृणुह्यासुषोमया ॥ इति तीर्थजलेनापूर्य ॥

अथ गन्ध ( चन्दन ) गेरना ॥

ॐ गंधद्वारांदुराधर्षां नित्य—पुष्टांकरीषिणींईश्वरींसर्वभू-तानांतामिहोपह्वयेश्रियम् ॥ इति कलशे गंध प्रक्षेपः ॥

अथ सर्वोषधी गेरना ❀

ॐ याऽओषधीः पूर्वायातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणा-महठं॰ शतंधामानिसप्तच ॥ इति सर्वोषधी प्रक्षेपः ॥

अथ दूर्वा गेरना ॥

ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानो दूर्वेप्रतनुसहस्रेणशतेनच ॥ इति दूर्वाप्रक्षेपः ॥

अथ कुशा गेरना ॥

ॐ पवित्रेस्थोवैष्णव्यौसवितुर्वःप्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामः पुनेतच्छकेयम् ॥ इति कुशप्रक्षेपः ॥

अथ[1] सप्तमृत्तिका गेरना ॥

ॐ स्योनापृथिविनोभवान्नृक्षरानिवेशनी ॥ यच्छानः शर्मस-प्रथाः ॥ इतिसप्तमृदप्रक्षेपः ॥

अथ पुङ्गीफल गेरना ॥

ॐ याःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्प-तिप्रसूतास्तानोमुञ्चन्त्वहठं॰ हसः ॥ इति पुङ्गीफलप्रक्षेपः ॥

अथ[2] पंचरत्नानिप्रक्षेपणम् पंचरत्नी गेरना ॥

---

❀ कुष्टं मांसी हरिद्रे द्वे मुरा शैलेय-चन्दनम् ॥ वचा चंपक मुस्ते च सर्वौषध्यो दशस्मृताः ॥

१—गजाश्वरथ वल्मीक सङ्गमाद्ध्रद गोकुलात् ॥ मृदमानीय कुम्भेषु प्रक्षिपेच्चत्वरात्तथा ॥ गोकुलावधि सप्त चत्वरेणसहाष्टौभवेयुः ॥

२—कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ॥ एतानि पंचरत्नानि रत्नशास्त्र विदो विदुः ॥

ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्॥ दधद्रत्नानि-दाशुषे ॥ वा ॥ सहिरत्नानिदाशुषेसुवातिसविताभगः तंभागंचित्रमीमहे ॥ इति पंचरत्नानिप्रक्षेपः ॥

सोने के अभाव में दक्षिणा गेरना।

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥ सदाधार पृथिवीन्द्या मुतेमां कस्मैदेवाय हविषा व्विधेम ॥ इति दक्षिणा प्रक्षेपः ॥

[1]अथ पंच पल्लव गेरना

ॐ अश्वत्थेवो निषदनं पर्णेवोवसतिष्कृता ॥ गोभाजऽइ-त्किला सथयत्सनवथ पूरुषम् ॥ इति पंच पल्लवानि प्रक्षेपः ॥

अथ कलश के गले में मौली ( सूत्र ) बाँधना।

ॐ युवा सुवासाः परिवीतऽआगात्सऽउश्रेयान् भवति जाय-मानः ॥ तन्धीरासः कवयऽउन्नयन्ति साध्यो मनसा देवयन्तः॥ इतिकौसुम्भसूत्र बंधनम् ॥

पात्र में चावल भर कर कलश के ऊपर रखना।

ॐ पूर्णादर्विपरापत सुपूर्णा पुनरापत ॥ वस्ने वविक्रीणा वहाऽइष मूर्जठ० शतक्रतो ॥ इति कलशोपरि तन्दुल पूर्णपात्र निधानम् ॥

अथ नारियल के ऊपर स्वस्तिक लगा सूत्र बाँधकर पूर्ण पात्र के ऊपर रखना।

ॐ श्रीश्चते लक्ष्मीश्च पत्न्या वहो रात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाण मुम्म ऽइषाण सर्वलोकम्म-ऽइषाण ॥ इति श्रीफलनिधानम् ॥

कलश में वरुण का पूजन करना ॥

ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो

---

१—श्राद्धे। अश्वत्थोदुम्बर प्लक्ष चूत न्यग्रोध पल्लवाः।
पंच भंगा इति ख्याता सर्वे कर्मसु शोभनाः ॥ १ ॥



हविर्भिः अहेडमानो वरुणे हवोध्युरुशर्ठ०समानऽआयुः प्रमोषीः ॥
इत्यनेन पाद्यादिभिः वरुणं संपूज्य ।

॥ प्रार्थना ॥

ॐ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ॥ मूले तत्रस्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥१॥ कुक्षौ तु सागरास्सप्त सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोथ यजुर्वेदो सामवेदोह्यथर्वणः ॥२॥ अंगैश्चसहिताः सर्वे कलशन्तु समाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिः पुष्टि करी सदा ॥३॥ आयान्तु "यजमानस्य" (मम गृहे च) दुरित क्षयकारकाः ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥४॥ आयान्तु "२यजमानस्य" (मम गृहे च) दुरित क्षयकारकाः ॥ देव दानव संवादे मथ्यमाने महोदधौ ॥५॥ उत्पन्नोसि तदा कुँभः विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्व तीर्थानि देवाः सर्वे त्वयिस्थिताः ॥६॥ त्वयितिष्ठन्तिभूतानित्वयिप्राणाः प्रतिष्ठिताः ॥ शिवःस्त्वयंत्वमेवासि विष्णुस्त्वंच प्रजापतिः ॥७॥ आदित्यावसवोरुद्राविश्वेदेवाः स पैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः काम फल प्रदाः ॥८॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भवः ॥ सान्निध्यं कुरुमे देव ! प्रसन्नोभव सर्वदा ॥९॥ ॐ पाशपाणे नमस्तुभ्यं पद्मिनी जीवनायक ! ॥ प्रधान पूजनं यावत्तावत्त्वं सन्निधौ भव ॥ इतिकलशपूजनम् ॥

अथ तान्त्रिक रक्षा ॥

ॐ सूर्यः सोमोयमः काल सन्ध्ये भूतान्यहक्षपाः ॥ पवनो दिग्पतिर्भूमिराकाशंखचरामरा ॥ ब्राह्मयं शासन मास्थाय कल्पध्वमिह संनिधिम् ॥ इत्यनेन भूमिं स्पृष्ट्वा दिग्बंधनं कुर्यात् ॥

सामान्यार्घ कलश स्थापनम् ॥

---

१–२ —देवपूजार्थं इत्यपिपाठः ।



* पंचगव्य से भूमि तथा सामग्री को छिड़क कर शुद्ध करना, पूजन के लिये अपने वाम भाग में साधारण कलश स्थापन करना।

ॐ रँ इति जलधारया अग्नि प्राकारं विचिन्त्य पूजा मारभेत् ॥ तत्र साधारण कलशं संस्थाप्य वरुणं सम्पूज्य पीठ पूजां



कुर्यात् ॥ स्ववामभागे विन्दु त्रिकोण वृत्त चतुरस्र मण्डलं निर्माय ॥ ॐ ह्रीं आधार शक्तयेनमः ॥ इति सम्पूज्य तत्राधारं संस्थाप्य ॥ षडङ्ग पूजनं कुर्यात् ॥ ॐ क्रः अस्त्रायफट् इत्येनेन पात्रं प्रक्षाल्य ॥ ॐ क्रां हृदयायनम इति जलेनापूर्य ॥ मँ दशकलात्मने वह्नि मण्डलायनमः ॥

---

* पंचगव्य प्रामाण—वसिष्ठ संहितायाम् ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पि कुशोदकं॥ पंचगव्यमिदं प्रोक्तम्महापातक नाशनम् ॥१॥गोशकृद्द्विगुणं मूत्रं दुग्धं दद्याच्चतुर्गुणम् ॥ घृतं चाष्ट गुणं चैव पंचगव्ये तथादधि॥

पंचगव्य संमेलन प्रकार:

ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो योनः प्रचोदयात् ॥ गोमूत्रं ॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियम् ॥ गोवर ॥ ॐ आप्यायस्व समेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवाव्वाजस्य संगथे ॥ दूध ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णो रश्वस्य व्वाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् ॥ दही ॥ ॐ तेजोसिशुक्रमस्यमृतमसिधामनामासि ॥ प्रियं देवानामना धृष्टंदेवयजनमसि ॥ घी॥ इन सब को कुशा से एक पात्र में मिलाना नीचे लिखे मन्त्र से ॥

ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥

बाद में कुशा से अपने चारों ओर छिड़के तथा यजमान और आचार्य आदि को भी पीना चाहिये ॥

ॐ अँ द्वादश कलात्मने सूर्य मण्डलायनमः ॥ 'मूलेन तीर्थोदकैः पूरयेत् ॥ पुनः गंधादिभिः सम्पूज्य ॥ ॐसं—षोडश कलात्मने सोममण्डलाय नमः ॥ ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिन्धु कावेरि जलेस्मिन्संनिधिं कुरु ॥ इत्यंकुश मुद्रया[2] तीर्थान्यावाह्य ॥ मूलमष्टवारं जप्त्वा धेनु[3] मत्स्य[4] कुम्भ[5] मुद्राः प्रदर्श्य तज्जलेन आत्मानं पूजा सामग्रीञ्च सम्प्रोक्ष्य ॥ इतिसामान्यार्घकलशस्थापनम् ॥

पहिले श्री सूक्त के १६ मन्त्रों से अपने शरीर में देह न्यास करे ॥ इसी प्रकार भगवती की मूर्ति से फूल लगाकर भगवती की मूर्ति में भी इन्हीं सब अंगों का ध्यान से न्यास करना चाहिये ॥

ॐ हिरण्य वर्णां हरिणीं सुवर्ण रजतस्रजाम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥ शिरसि ॥ ॐ ताम्म आवह जातवेदो लक्ष्मी मनप गामिनीम् ॥ यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥ नेत्रयोः ॥ ॐ अश्वपूर्णां ( वां ) रथमध्यां हस्तिनाद प्रबोधिनीम् ॥ श्रियंदेवी मुपह्वये श्रीर्मा देवीजुषताम् ॥३॥ कर्णयोः ॥ ॐ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तांतर्पयन्तीम् ॥ पद्मे स्थितां पद्म वर्णां तामिहो पह्वये श्रियम् ॥४॥ घ्राणयोः ॥ ॐ चन्द्रां प्रभासां यशसा ज्वलन्ती श्रियं लोके देवि जुष्टामुदारां ॥ तां पद्मनी ( ने ) मीं शरणमहं

---

१—ऐंह्रीं क्लीं चामुण्डायै विच्चे वा दुर्गे रक्षिणि स्वाहा ॥ अंकुशमुद्रा २—ऋज्वीं मध्यमिकां कृत्वा तर्जनीं मध्य पर्वणि । संयोज्याकुँचयेत्किंचिन्मुद्रैषांकुश संज्ञिताः ३—धेनुमुद्रा वामांगुलीनां मध्येषु दक्षिणांगुलि संस्थिता ॥ नियोज्य तर्जनी दक्षा वाम मध्यमया तथा ॥ दक्ष मध्यमया वामा तर्जनींच नियोजयेत् ॥ दक्षयानामयावामां कनिष्ठांचनियोजयेत् ॥ पिहिताधोमुखी चैषा धेनु मुद्रा प्रकीर्तिता ॥ ४—वामोपरिष्ठात्संस्थाप्य दक्ष हस्त प्रसारयेत ॥ अंगुष्ठौ युतयोः पार्श्वेमत्स्य मुद्रेयमीरिता ॥ ५—हस्तद्वयेन सावकाशिक मुष्टिकरणे कुम्भ मुद्रा ॥

प्रपद्ये अऽलक्ष्मीर्मेनश्यतां त्वां वृणे ।।५।। मुखे।। ॐ आदित्य-वर्णे तपसोधि जातो वनस्पतिस्तववृक्षोऽथबिल्वः ।। तस्यफलानि तपसानुदन्तु मायान्तरायाश्चवाह्या अलक्ष्मीः ।।६।। ग्रीवायां ।। ॐ उपैतु मां देव सखः कीर्तिश्चमणिना सह ।। प्रादुर्भूतो (स्मि) सुराष्ट्रेस्मिन् कीर्तिमृद्धिं ददातु मे ।।७।। करयोः ।। ॐ क्षुत्पिपासामलांज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।। अभूतिमसमृद्धिं च सर्वां निर्णुदमे गृहात् ।। ८ ।।हृदि।। ॐ गन्धद्वारांदुराधर्षां नित्य-पुष्टां करीषिणीम् ।। ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियम् ।।९।। नाभौ ।। ॐ मनसः काममाकूतिं वाचः सत्यमशीमहि ।। पशूनां रूपमन्नस्यमयि श्रीः श्रयतांयशः ।।१०।। लिङ्गे ।। ॐ कर्दमेन-प्रजाभूता मयि संभव कर्दम ।। श्रियंवासय मे कुलेमातरं पद्म-मालिनीम् ।।११।। गुदे ।। ॐ आपः स्रजन्तुस्निग्धानि चिक्लीत वस मे गृहे ।। निचदेवीं मातरं श्रियंवासय मे कुले ।। १२ ।। ऊर्वोः ।। ॐ आर्द्रां पुष्करिणीं पुष्टिं पिंगलांपद्ममालिनीम् ।। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ।।१३।। जानुनोः ।। ॐ अर्द्रांयः करिणीं यष्टीं सुवर्णां हेममालिनीम् ।। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ।।१४।। जंघयोः ।। ॐ ताम्म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।। यस्यां हिरण्यं प्रभूतिं गावोदास्योश्वान्विंदेयं पुरुषानहम् ।।१५।। चरणयोः ।। ॐ यः शुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहम् ।। सूक्तं पंचदशर्चं च श्रीकामः सततंजपेत् ।।१६।। सर्वाङ्गे ।।

ततः कलशोपरि स्वर्णमयीं श्री दुर्गा प्रतिमां अग्न्युत्तारण-पूर्वकं संनिधाय पट्टवस्त्रैराच्छाद्य पुरुष सूक्तेन श्रीसूक्तेनपुराणोक्त मार्गेण वा षोड़शोपचारैः यथोपचारैर्वा संपूजयेत् ।। तद्यथा ।।

अथाग्न्युत्तारण विधिः ।।


तत्र तावत्साचार्यो यजमानः ॥ देशकालौसंकीर्त्य ॥ अस्याः स्वर्णमयी श्री दुर्गा प्रतिमायाः॥ घटनादि दोषपरिहारार्थं अग्न्युत्तारण पूर्वकं प्राणप्रतिष्ठां करिष्ये ॥ मूर्तिं घृतेनाभ्यज्य ॥ तदुपरि दुग्ध मिश्रित जलधारां कुर्यात् पातयेद्वा ॥

अग्न्युत्तारण मन्त्राः ॥

ॐ समुद्रस्यत्वा व्वकयाग्ने परिव्ययामसि ॥ पावकोऽअस्मभ्यर्ठं॰ शिवोभव ॥१॥ॐहिमस्य त्वा जरायुणाग्ने परिव्ययामसि ॥ पावकोऽअस्मभ्यर्ठं॰ शिवोभव ॥२॥ ॐ उपज्मन्नुपवेतसे वतरनदीष्वा ॥ अग्ने पित्तमपामसि मण्डूकिताभिरागहि ॥ सेमन्नोयज्ञं पावकवर्ण र्ठं॰ शिवंकृधि ॥ ३ ॥ ॐ अपामिदं न्ययनर्ठं॰ समुद्रस्य निवेशनम् ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः ॥ पावको अस्मभ्यर्ठं॰ शिवोभव ॥ ४ ॥ ॐ अग्ने पावक रोचिषामन्द्रया-देवजिह्वया ॥ आदेवान्वक्षियक्षि च ॥ ५ ॥ ॐ सनः पावकदीदिवोग्ने देवाँ २ ऽइहावह ॥ उपयज्ञर्ठं॰ हविश्च नः ॥ ६ ॥ॐ पावक या यश्चितयन्त्वा कृपाक्षामन्रुरुच ऽ उषसोनु भानुना ॥ तूर्वन्नया मन्नेतशस्य नूरणऽआयोघृणेनततृषाणोऽ अजरः ॥७॥ ॐ नमस्ते हरसेशोचिषे नमस्तेऽअस्त्वर्चिषे ॥ अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यर्ठं॰ शिवोभव ॥८॥ ॐ नृषदेव्वेडप्सुषदेव्वेड्वर्हिषदेव्वेड्वनसदेव्वेड् स्वर्विदेव्वेट ॥ ९ ॥ ॐ ये देवादेवानांयज्ञियायज्ञिया ॐ संवत्सरीण मुपभागमासते ॥ अहुतादोहविषोयज्ञेऽअस्मिन्त्स्वयं पिवन्तुमधुनोघृतस्य ॥ १० ॥ ॐ येदेवा देवेष्वधि देवत्वमा यन्ये ब्रह्मणः पुरऽएतारोऽअस्य ॥ येभ्योनऽऋते पवतेधाम किञ्चनतेदिवोन पृथिव्याऽअधिस्नुषु ॥११॥ ॐ प्राणदाऽअपानदा व्यानदा व्वर्चोदा वरिवोदाः ॥ अन्यांस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यर्ठं॰ शिवोभव ॥१२॥ ततः

प्राणप्रतिष्ठां कुर्यात् ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहम् अस्याः श्रीदुर्गा प्रतिमायाः प्राणा इह प्राणाः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहं अस्याः श्री दुर्गा प्रतिमायाः जीव इहस्थितः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहं अस्याः श्री दुर्गा प्रतिमायाः सर्वेन्द्रियाणि वाङ् मनस्त्वक्चक्षुः श्रोत्र जिह्वाघ्राणपाणि पाद पायूपस्थानि इहैवागत्य सुखंचिरंतिष्ठन्तुस्वाहा ॥ ॐ मनोजूति- र्जुषतामाजस्य बृहस्पतिर्यज्ञ मिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्द- धातु ॥ विश्वे देवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ ॐ एषवै प्रतिष्ठा नामयज्ञो यत्रैतेन यज्ञे न यजन्ते सर्वमेव प्रतिष्ठितम्भ- वति ॥ इति प्रतिष्ठाप्य ॥ अथ नेत्रोन्मीलनम् ॥ ॐ वृत्रस्यासि कनीन कश्चक्षुर्दाऽअसिचक्षुर्मेदेहि ॥ गंधादि पंचोपचारान्दत्वा संस्कारसिद्धये षोडषप्रणवावृत्तिं कुर्यात् ॥ अनेन अस्याः श्री दुर्गा प्रतिमायाः गर्भाधानादि षोडश संस्कारान्संपादयामि ॥ इति वदेत् ॥ ततः श्री दुर्गा प्रतिमां प्रधान कलशोपरिधृत्वा षोडशोपचारैः पञ्चोपचारैः यथोपचारैर्वा पूजयेत् ॥

फूल हाथमें में लेकर अपने हृदय में ध्यान करना ॥

ॐ जटाजूट समायुक्तामर्द्धेन्दु कृतलक्षणाम् ॥ लोचनत्रय संयुक्ताम्पद्मेन्दु सदृशाननाम् ॥ १ ॥ अतसीपुष्प वर्णाभां सुप्र- तिष्ठां सुलोचनाम् ॥ नवयौवन संपन्नां सर्वाभरण भूषिताम् ॥२॥ सुचारुवदनां तद्वत्पीनोन्नतपयोधराम् ॥ त्रिभंगस्थान संस्थान महिषासुरमर्दिनीम् ॥ ३ ॥ त्रिशूलं दक्षिणेदद्यात्खड्गं चक्रं क्रमा- दधः ॥ तीक्ष्णबाणं तथाशक्तिं वामतोपि निबोधत ॥ ४ ॥ खेटकं पूर्ण चापं च पाशमंकुशमूर्द्ध्वजम् ॥ घंटां वा परशुं वापि वामतः सन्निवेदयेत् ॥५॥ अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्श-



येत् ॥ शिरश्छेदोद्भवंतद्वद्दानवं खड्गपाणिनम् ॥६॥ हृदि शूलेन-निर्भिन्नं निर्दयन्त्र विभूषितम् ॥ रक्तरक्तीकृताङ्गञ्च रक्तविस्फारितेक्षणम् ॥७॥ वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ॥ सपाश वामहस्तेन धृतकेशं च दुर्गया ॥८॥ वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत् ॥ देव्यास्तु दक्षिणं पादंसमंसिंहोपरि स्थितम् ॥९॥ किंचिदूर्ध्वं तथा वाममंगुष्ठो महिषोपरि ॥ स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत् ॥१०॥उग्रचण्डाप्रचण्डा च चण्डोग्रा चण्ड नायिका ॥ चण्डा चण्डवती चैव चंडरूपातिचण्डिका ॥११॥ आभिः शक्तिभिरष्टाभिः सततंपरिवेष्टितम् ॥ चिन्तयेत्सततं देवीं धर्म कर्मार्थ मोक्षदाम् ॥१२॥

माथे में जटाओं के जूड़े पर अर्द्ध चंद्रमा सुशोभित है। बड़े २ सुन्दर तीन नेत्र कमल के खिले हुए फूल के समान सुन्दर गोल मुख ॥ १ ॥ अलसी के पुष्प के सदृश शरीर का नीला रंग नवीन यौवन सम्पन्न उत्तम आभूषणों ( गहनों ) से शोभायमान ॥ २ ॥ उत्तम शरीर कठोर और उन्नत पयोधर तीन जगह से झुकी हुई महिषासुर को मर्दन करने वाली ॥ ३ ॥ दाहिने हाथों में त्रिशूल, खड्ग, चक्र, पैना बाण, भाला ॥ ४ ॥ बाम हाथों में ढाल, धनुष, पाश ( नाग पाश ), अंकुश, घंटा वा फरसा धारण करे हुए ॥ ५ ॥ नीचे पृथ्वी में महिषासुर के दो सिर कटे हुए तथा महिषासुर दानव हाथ में तलवार लेकर युद्ध करते हुए के ॥ ६ ॥ हृदय को त्रिशूल से चीर दिया उससे उसके सब अंग रक्त से भीग गये और दोनों नेत्र फटे रह गये ॥ ७ ॥ नागपाश से दानव के गले को बाँध दिया इससे उसकी भौंह और मुँह भयानक प्रतीत होने लगा तथा बाएँ हाथ से दुर्गा भगवती ने उस दानव के सिर के बाल एवं पाश को धारण कर लिया ॥ ८ ॥ उस समय दानव ने रुधिर की वमन करते हुए देवी के सिंह को और देवी के दाहिने पैर को बराबर सिंह के ऊपर रखा देखा ॥ ९ ॥ और उसी प्रकार वाम पैर के अंगूठे को थोड़ा उठा हुआ उस दानव ने अपने ऊपर विराजमान देखा इस रूप को देखकर इन्द्रादि सब देवगण स्तुति करने लगे ॥ १० ॥ उग्र चण्डा, प्रचण्डा, चण्डोग्रा, चण्ड नायिका, चण्डा, चण्डवती,



चण्डरूपा, अति चण्डिका ॥ ११ ॥ इन आठ शक्तियों से निरन्तर वेष्टित धर्म, अर्थ, काम और मोक्ष देने वाली भगवती का हर समय ध्यान करता हूँ ॥ १२ ॥

इति ध्यात्वा करस्थित पुष्पाणि कलशे मूर्तौ वा क्षिपेत् ॥

हाथ में फिर फूल लेकर प्रार्थना करै

ॐ महिषघ्नीं महादेवीं कुमारीं सिंहवाहिनीम् ॥ दानवांस्तर्जयन्तीञ्च सर्वकामदुघां शिवाम् ॥१॥ ध्यायामि मनसा दुर्गां नाभिमध्ये व्यवस्थिताम् ॥ आगच्छ वरदे ! देवि ! दैत्यदर्पनिपातिनि ! ॥२॥ पूजांगृहाण सुमुखि ! नमस्ते शङ्करप्रिये ! ॥ सर्वतीर्थमयं वारि सर्वदेवसमन्वितम् ॥३॥ इमं घटं समागच्छ तिष्ठ देवगणैः सह ॥ दुर्गे ! देवि ! समागच्छ सान्निध्यमिह कल्पय ॥ ४ ॥ बलिपूजां गृहाणत्वमष्टाभिः शक्तिभिः सह ॥ अस्मिन् घटे समागच्छ स्थितिं मत्कृपया कुरु ॥ रक्षां कुरु सदा भद्रे ! विश्वेश्वरि ! नमोस्तुते ॥ एह्येहि दुर्गे ! दुरितौघनाशिनि ! ॥ प्रचण्ड दैत्यौघ विनाशकारिणि ! ॥ उमे ! महेशार्द्ध शरीरधारिणि ! ॥ स्थिरा भव त्वं मम यज्ञकर्मणि ॥

इति देवीं ध्यात्वा मूलाधारात्कुण्डलिनीमुत्थाप्य ॥ तयासह शिवेन संयोज्य वायुबीजेन नासापुटेन देवीं कुसुमाञ्जलावानीय—

एहि दुर्गे ! महाभागे ! रक्षार्थं मम सर्वदा ॥
आवाहयाम्यहं देवि ! सर्व कामार्थ–सिद्धये ॥

इत्यनेन पुष्पाञ्जलिं कलशे यन्त्रे वा निधाय ॥ आत्मानं देवी रूपं विभाव्य पूजयेत् ॥ तत्रमंत्राः ॥

अथ वेदोक्त दुर्गापूजन विधिः

[1]अथ आवाहनम् ॥

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां ॥ चन्द्रां हिरण्मयीं

टि० १ तत्रैववाचस्पतौ ॥ कुर्यादावाहनंमूर्तौमृन्मय्यां सर्वदैवहि ॥ प्रतिमायां जले वह्नौ नावाहनविसर्जनम् ॥
आवाहनादि की मुद्रा यन्त्र पूजन में लगाई जायँगी ॥



लक्ष्मीं जातवेदो ममावह ॥ ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥१॥ ॐ आगच्छेहमहादेवि ! सर्वसम्पत्प्रदायिनि ! ॥ यावद्व्रतं समाप्येत तावत्त्वं सन्निधौ भव ॥ इत्यावाहनम् ॥

अनन्तर आसन के लिये पुष्प हाथ में लेकर ॥

ॐ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ ॐ पुरुषएवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ अनेकरत्नसंयुक्तं नानामणिगणान्वितम् ॥ कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम् ॥ इत्यासनम् ॥

भगवती के पैर धुलाने के लिये जल में नीचे लिखे पदार्थ मिलाना
श्यामाक, विष्णुक्रान्ता, कमलपुष्प, दूर्वा, जल आदि

पाद्यम् ॥

ॐ अश्वपूर्वां ( र्वां ) रथमध्यां हस्तिनादप्रमोदिनीम् ॥ श्रियंदेवीमुपह्वये श्रीर्मादेवीजुषताम् ॥ ॐ एतावानस्य महिमातो-ज्यायांश्चपूरुषः ॥ पादोस्यविश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥३॥ गङ्गादि सर्व तीर्थेभ्यो मया प्रार्थनयाहृतम् ॥ तोयमेतत्सुख-स्पर्शं पाद्यार्थं प्रतिगृह्यताम् ॥ इतिपाद्यम् ॥

अर्घ्यम् ॥

दूर्वा, तिल, दर्भा, सर्षप, यव, पुष्प, अक्षत, चन्दन जल में
मिलाकर अर्पण करना ॥

ॐ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पय-न्तीम् ॥ पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ॐ त्रिपादूर्ध्वउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततो विष्वंव्यक्रामत्साशनानशनेअभि ॥ निधीनां सर्व रत्नानां त्वमनर्घ्यगुणा-ह्यसि ॥ सिंहोपरिस्थिते देवि ! गृहाणार्घ्यंनमोस्तुते ॥४॥ इत्यर्घ्यम्

[1]अथ मधुपर्कम् ॥

दधि मधु घृत समान भाग न हों।

ॐ मधुव्वाताऋतायते मधुक्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ दधिमधुघृतसमायुक्तं पात्रयुग्मसमन्वितम् ॥ मधुपर्कं गृहाण त्वं शुभदा भव शोभने ! ॥ ५ ॥

अथाचमनम् ॥

ॐ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियंलोकेदेवि वजुष्टामुदारां ॥ तां पद्मनेमिंशरणमहंप्रपद्ये अलक्ष्मीर्मेनश्यतां त्वां वृणे ॥ ॐ ततो विराडजायतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ कर्पूरेणसुगंधेन सुरभिस्वादु शीतलम् ॥ तोयमाचमनीयार्थं देवि ! त्वं प्रतिगृह्यताम् ॥ ६ ॥ इत्याचमनम् ॥

अथ स्नानम् ॥ पहले मलापकर्षण स्नान कराना।

ॐ आदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोऽथबिल्वः ॥ तस्यफलानितपसानुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ॐ तस्माद्यज्ञात्सर्वहुतः संभृतंपृषदाज्यम् ॥ पशूँस्ताँश्चक्रेवायव्यानारण्याग्राम्याश्चये ॥ मन्दाकिन्याःसमानीतैर्हेमांभोरुहवासितैः ॥ स्नानं कुरुष्वदेवेशि ! सलिलैश्च सुगन्धिभिः ॥ इतिस्नानम् ॥७॥

पुनराचमनीयम् ॥

उच्छिष्टोप्यशुचिर्वापि यस्यस्मरणमात्रतः ॥ शुद्धिमाप्नोतितस्मै ते पुनराचमनीयकम् ॥ स्नानवस्त्रोपवीतान्तेऽपितत्स्मृतम् ॥ ८ ॥

सुगन्धित तैल व इत्र मल कर स्नान कराना।

ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवानो दूर्वेप्रतनुसहस्रेणशतेन च ॥ ॐ स्नेहंगृहाण स्नेहेन लोकेश्वरि !

---

१ पाराशरः । सर्पिरेक गुणं प्रोक्तं शोधितं द्विगुणं मधु ॥
मधुपर्के विधौ प्रोक्तं सर्पिषा च समं दधि ॥
घी १ भाग छना हुआ, शहद २ भाग, दधि १ भाग ॥

महानघे ! ।। सर्वलोकेषु शुद्धात्मन् ! ददामि स्नेहमुत्तमम् ॥९॥

अब पंचामृत से स्नान कराना। पहिले दूध से स्नान कराना।

ॐ पयः पृथिव्यांपयओषधीषु पयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः सन्तुमह्यम् ॥ कामधेनुसमुद्भूतं सर्वेषांजीवनं परम् ।। पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥१०॥ शुद्ध जल से स्नान कराना।

दही से स्नान कराना।

ॐ दधिक्राव्णोअकारिषं जिष्णोरश्वस्यव्वाजिनः ॥ सुरभिनो मुखाकरत्प्रण आयूᳬषितारिषत् ॥ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ॥ दध्यानीतं मया देवि ! स्नानार्थं प्रतिगृह्यताम् ॥११॥ शुद्ध जल से स्नान कराना।

अब घृत से स्नान कराना।

ॐ घृतं घृत पावानः पिबत व्वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा ॥ दिशः प्रदिशऽ आदिशोव्विदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥ नवनीतसमुत्पन्नं सर्वसंतोषकारकम् ॥ घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥१२॥

पुनः शुद्ध जल से स्नान कराना।

शहद से स्नान कराना।

ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवᳪरजः ॥ मधु द्यौरस्तुनः पिता ॥ तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ॥ तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ १३ ॥

पुनः शुद्ध जल से स्नान कराना।

अब शर्करा ( बूरा ) से स्नान कराना।

ॐ अपाᳬरसमुद्वयसᳪ सूर्ये सन्तᳪ समाहितम् ॥ अपाᳬरसस्य योरसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वा जुष्टं गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टतमम् ॥ इक्षुसार समुद्भूता शर्करा पुष्टिकारिका ॥ मलापहारिका दिव्या

स्नानार्थं प्रतिगृह्यताम् ॥१४॥ फिर शुद्ध जल से स्नान कराना ॥

[1]पंचामृत मिलाकर स्नान कराना।

ॐ पंचनद्यः सरस्वतीमपियन्ति सस्रोतसः ॥ सरस्वती तु पंचधा सो देशे भवत्सरित् ॥ पयोदधि घृतं चैव मधु च शर्करान्वितम् ॥ पंचामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥ १५ ॥

शुद्ध स्नान के बाद गन्ध ( चन्दन ) से स्नान कराना।

ॐ गन्ध द्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ मलयाचलसंभूतं चन्दनागरु संभवम् ॥ चन्दनं देवि ! देवेशि ! स्नानार्थं प्रतिगृह्यताम् ॥१६॥

फिर शुद्ध जल से स्नान कराना।

सुगन्धित ( उबटना ) लगाकर स्नान कराना।

ॐ अठं० शुनातेऽअठं० शुः पृच्यताम्परुषापरुः ॥ गन्धस्ते सोम भवतु मदाय रसोऽअच्युतः ॥

नानासुगन्धि द्रव्यं च चन्दनं रजनीयुतम् ॥
उद्वर्त्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥१७॥

अब शुद्ध जल से स्नान कराना।

ॐ शुद्धवालः सर्व शुद्ध वालो मणिवालस्तऽ आश्विनाः श्येतः श्येताक्षो ऽरुणस्ते रुद्राय पशुपतये कर्णायामाऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥

पुनराचमनीयं समर्पयामि नमः ॥ आगे श्री[1] सूक्त वा पुरुष सूक्त के १६ मन्त्रों से मूर्ति पर शंख से महाभिषेक करना चाहिये। तिसके बाद दो वस्त्र ( धोती दुपट्टा ) वा लेंगा ओढ़नी आँगी धारण कराकर सिंहासन व कलश पर दुर्गा-मूर्ति को स्थापित कर पूजन करना।

---

१ स्कांदे—क्षीराद्दशगुणं दध्ना घृतेनैवदशोत्तरम् ।
मधुनातद्दशगुणंसितयातुततोधिकम् ॥

१—श्री सूक्त के मन्त्र ३४ सफ़े से छपे हैं।

दो वस्त्र ॥

ॐ उपैतुमां देवसखः कीर्तिश्च मणिना सह ॥
प्रादुर्भूतो सुराष्ट्रेऽस्मिन् कीर्तिं वृद्धिं ददातु मे ॥
तस्माद्यज्ञात्सर्वहुतऋचः सामानि यज्ञिरे ॥
छन्दाᳬसि यज्ञिरे तस्माद्यजुस्तस्मादजायत ॥
पट्टकूलयुगं देवि ! कंचुकेन समन्वितम् ॥
परिधेहि कृपां कृत्वा दुर्गे ! दुर्गतिनाशिनि ! ॥

इति युग्म वस्त्रम् ॥ पुनराचमनीयम् ॥

अथोपवीतम् ॥

ॐ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहं ॥ अभूतिमसमृद्धिं च सर्वान्निर्णुद मे गृहात् ॥ ॐ तस्मादश्वाऽअजायन्त येकेचो भयादतः ॥ गावोहयज्ञिरे तस्मात्तस्माज्जाताअजावयः ॥
स्वर्ण-सूत्रमयं दिव्यं ब्रह्मणा निर्मितं पुरा ॥
उपवीतं मया दत्तं गृहाण परमेश्वरि ॥

इति यज्ञोपवीत के बाद आचमन कराना ।

अथ चन्दन चढ़ाना ॥

ॐ गन्ध द्वारां दुराधर्षांनित्यपुष्टां करीषिणीम् ॥
ईश्वरीं सर्व भूतानां तामिहोपह्वये श्रियम् ॥
ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ॥
तेन देवा अयजन्त साध्याऽऋषयश्च ये ॥
श्रीखण्डचन्दनंदिव्यं गन्धाढ्यं सुमनोहरम् ॥
विलेपनं च देवेशि ! चन्दनं प्रतिगृह्यताम् ॥

इति चन्दनम् ॥ सौभाग्य सूत्र दानम् ॥

ॐ सौभाग्यसूत्रं वरदे ! सुवर्ण-मणि-संयुतम् ॥
कंठे बध्नामि देवेशि ! सौभाग्यं देहि मे सदा ॥
कंठ सूत्रं समर्पयामि नमः ॥

अक्षत चढ़ाना।

ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवो विप्रानविष्ठयामतीयोजान्विन्द्रते हरी ॥

अक्षतान्निर्मलान् शुद्धान् मुक्तामणिसमन्वितान् ॥ गृहाणे-मान्महादेवि ! देहि मे निर्मलां धियम् ॥ इत्यक्षतान् ॥

हरिद्राचूर्ण चढ़ाना।

हरिद्रारञ्जिते देवि ! सुखसौभाग्यदायिनि ॥
तस्मात्त्वांपूजयाम्यत्र सुखं-शान्ति प्रयच्छ मे ॥

हरिद्राचूर्णं समर्पयामि नमः ॥

गुलाल चढ़ाना।

कुंकुमं कान्तिदं दिव्यं कामिनीकामसंभवम् ॥ कुंकुमेनार्चिते देवि ! प्रसीद परमेश्वरि ! ॥

इति कुङ्कुमं ( गुलाल ) समर्पयामि नमः ॥

सिंदूर।

सिन्दूरमरुणाभासं जपाकुसुमसन्निभम् ॥ अर्पितंते मया देवि ! प्रसीद परमेश्वरि ! ॥

सिंदूरं समर्पयामि नमः ॥

कज्जल चढ़ाना।

चक्षुर्भ्यां कज्जलंरम्यं सुभगे ! शान्तिकारकम् ॥ कर्पूर-ज्योतिरुत्पन्नं गृहाण परमेश्वरि ! ॥

इति नेत्रे कज्जलं समर्पयामि नमः ॥

दूर्वाङ्कुर चढ़ाना ( क्षेपक है )

ॐ आर्द्रां पुष्करिणीं पुष्टिं पिंगलांपद्ममालिनीम् ॥ चन्द्रां-हिरण्मयीं लक्ष्मीं जातवेदोमावह ॥

ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥ एवानोदूर्वे प्रतनु सहस्रेण शतेनच ॥ दूर्वादले श्यामलेत्वं महीरूपेहरिप्रिये ! ॥ अतोदूर्वाभिर्भवतीं पूजयामि सदा शिवे ! ॥

इति दूर्वाङ्कुरान् समर्पयामि नमः ॥

विल्वपत्र अर्पण करना।

ॐ आर्द्रां यः करिणींयष्टिं सुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदोम आवह ॥ ॐ नमो विल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः ॥ श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च नमः ॥ अमृतोद्भवः श्री वृक्षोमहादेवप्रियः सदा ॥ विल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ! ॥

इति विल्वपत्राणि समर्पयामि नमः ॥

पल्लव अर्पण करना।

ॐ तांम आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं प्रभूतिं गावोदास्योश्वान् विन्देयंपुरुषानहम् ॥ ॐ अश्वत्थेवो निषदनं पर्णेवोव्वसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथ पूरुषम् ॥ गृह द्वारे चोग्रमपिदुष्टासुर निवर्हिणि ॥ पूजां करोमि चार्वंगि ! पल्लवैर्नंदनोद्भवैः ॥

इति पल्लवान्समर्पयामि नमः ॥

फलमाला अर्पण करना।

ॐ महादेवी च विद्महे विष्णु पत्नीं च धीमहि ॥ तन्नो देवीः प्रचोदयात् ॥ ॐ याः फलनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पति प्रसूतास्तानोमुञ्चन्त्वर्ठ० हसः ॥ शरत्काले समुद्भूतां निशुम्भासुर मर्दिनी ! ॥ फलमालां वरां देवि ! गृहाण सुरपूजिते ! ॥

इति फलमालां समर्पयामि नमः ॥

* रत्नमाला धारण कराना।

ॐ परिव्राजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदा-

---

* मुक्ता माणिक्य वैडूर्य। गोमेदान्वज्रविद्रुमौ ॥
पुष्परागं मरकतं गरुडोद्गार (नीलम्) मेवच ।
एभिस्तुग्रथिता 'स्वर्णरत्नमालेति' कथ्यते ॥ —शारदायां ॥

शुषे ।। ॐ कर्दमेनप्रजाभूता मयि सम्भ्रम कर्दम ।। श्रियं वासय मे गृहे मातरं पद्म मालिनीम् ।। मुक्ताफलयुतां मालां रत्नवैडूर्य सुप्रभाम् ।। माणिक्यस्वर्ण ग्रथितां गृह्यतां वरदे ! नमः ।।

इति रत्नमालां समर्पयामि नमः ।।

फूलों की माला धारण कराना ।

ॐ आपःस्रजन्तुस्निग्धानिचिक्लीत वसमेगृहे।। (नो) निचदेवीं मातरं श्रियं वासय मे कुले।। ॐ श्रीश्चतेलक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ।। इष्णन्निषाणामुम्मइ इषाण सर्वलोकम्मइषाण।। पद्म शंखज पुष्पादि शतपत्रैर्विचित्रताम् ।। पुष्पमालां प्रयच्छामि गृहाण त्वं सुरेश्वरि ! ।।

इति पुष्पमालां समर्पयामि नमः ।।

पुष्प चढ़ाना ।

ॐ मनसः काममाकूतिं वाचः सत्यमशीमहि ।। पशूनां रूप मन्नस्य मयिः श्रीः श्रयतां यशः ।।

ॐ यत्पुरुषंव्यदधुः कतिधाव्य कल्पयन् ।। मुखङ्किमस्या-सीत्किम्बाहूकिमूरूपादाउच्येते ।। पुष्पैर्नानाविधैर्दिव्यैः कुमुदै-रथचम्पकैः ।। पूजाते क्रियते देवि पुष्पाणि प्रतिगृह्यताम् ।।

मंदारपारिजातादि पाटली केतकानिच ।।
जाती चंपक पुष्पाणि गृहाणेमानि शोभने ! ।।

इति पुष्पाणि समर्पयामि नमः ।।

दुर्गा प्रदेय पुष्पाणि ।

कुन्दमन्दार पुन्नाग पाटली नाग केशरम् ।। आरग्वधं कर्णि-कारं जयन्ती नवमल्लिका ।।१।। सौगन्धिकं सकंकोलं पुन्नागा-शोकमल्लिका।। अन्यान्यपि सुगन्धीनि पुष्पपत्राणिदेशिकैः ।।२।।

इति शक्ति पल्लवे ।।

अलङ्कारम् ।

हार-कंकण-केयूर-मेखला-कुंडलादिभिः ।। रत्नाढ्य कुंडलो-

पेतं भूषणं प्रतिगृह्यताम् ॥

अलङ्काराभावे अक्षतान् समर्पयामि नमः ॥

सुगन्धित इत्र चढ़ाना ।

ॐ अहिरिवभोगैः पर्येतिबाहुं ज्यायाहेतिंपरिबाधमानः ॥ हस्तघ्नोविश्वाव्वयुनानिविद्धान्पुमान्पुमाᳬं सम्परिपातुविश्वतः ॥ चन्दनागरु कर्पूर कुंकुमं रोचनं तथा ॥ कस्तूर्यादि सुगन्धांश्च सर्वांगेषु विलेपयेत् ॥

इति परिमल ( इत्र ) द्रव्यं समर्पयामि नमः ॥

मालान्त पूजन के बाद अङ्ग पूजा करना ।

ॐ दुर्गायै नमः पादौ पूजयामि नमः ॥ ॐ महाकाल्यै नमः गुल्फौ पूजयामि नमः ॥ ॐ मंगलायै नमः जानुद्वयं पूजयामि नमः ॥ ॐ कात्यायन्यै नमः हृदयं पूजयामि नमः ॥ ॐ भद्रकाल्यै नमः कटिं पूजयामि नमः ॥ ॐ कमलवासिन्यै नमः नाभिं पूजयामि नमः ॥ ॐ शिवायै नमः उदरं पूजयामि नमः ॥ ॐ क्षमायैनमः हृदयं पूजयामि नमः ॥ ॐ कौमार्यै नमः स्तनौ पूजयामि नमः ॥ ॐ उमायैनमः हस्तौ पूजयामि नमः ॥ ॐ महागौर्यै नमः दक्षिणबाहुं पूजयामि नमः ॥ ॐ रमायै नमः स्कन्धौपूजयामि नमः ॥ ॐ महिषमर्दिन्यै नमः नेत्रे पूजयामि नमः ॥ ॐ सिंहवाहिन्यै नमः मुखं पूजयामि नमः ॥ ॐ माहेश्वर्यै नमः शिरः पूजयामि नमः ॥ ॐ कात्यायन्यै नमः सर्वाङ्गं पूजयामि नमः ॥ इत्यङ्ग पूजनम् ॥

अथ धूप अर्पण करना व अक्षत छोड़कर घंटा बजाना ।

ॐ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥ सूक्तं पंच दशर्चञ्च श्रीकामः सततंजपेत् ॥ ॐ धूरसि धूर्व धूर्वंतन्धूर्वतं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः ॥ देवानामसिवन्हितमᳬं सस्नितमं पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ दशाङ्गगुग्गुलं धूपं चन्द-

नागरु संयुतम् ॥ समर्पितं मया भक्त्या महादेवि ! प्रगृह्यताम् ॥

धूप पात्रं देवता वामे, इति धूपमाघ्रापयामि नमः ॥

अथ दीपक बलाना व अक्षत छोड़कर घंटा बजाना ।

ॐ सरसिजनिलयेसरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ॥ भगवति ! हरिवल्लभे ! मनोज्ञे ! त्रिभुवनभूतिकरि ! प्रसीद मह्यम् ॥ ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥ अग्निर्वर्चोज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ॥ ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ घृतवर्तिसमायुक्तं महातेजोमहोज्वलम् ॥ दीपं दास्यामि देवेशि ! सुप्रीताभवसर्वदा ॥

इति दीपं दर्शयेत् घृतदीपं सितवर्ति युतं देवतादक्षभागे ।
तैल दीपं रक्तवर्ति युतं देवता वाम भागे ।

अथ नैवेद्यम् ॥

नैवेद्यं निवेदयाभिनमः ॥ जलेनाभ्युक्ष्य ॥ गंधपुष्पाभ्यामाच्छाद्य ॥ धेनुमुद्रया अमृतीकृत्य ॥ योनिमुद्रां प्रदर्श्य ॥ सत्यन्त्वर्तेन परिषिञ्चामि इति प्रातः (ऋतंत्वासत्येन परिषिञ्चामि इति सायं) ॥ घंटांवादयेत् ॥

ग्रासमुद्रां प्रदर्श्य ॥ ॐ प्राणाय स्वाहा, अंगुष्ठ अनामिका कनिष्ठाभिः ॥ ॐ अपानाय स्वाहा अंगुष्ठ तर्जनीमध्यमाभिः ॥ ॐ उदानाय स्वाहा अंगुष्ठ मध्यमाऽनामिकाभिः ॥ ॐ व्यानाय स्वाहा अंगुष्ठतर्जनीमध्यमाभिः ॥ ॐ समानाय स्वाहा सर्वांगुलीभिः ॥ ॐ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ ॐ नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत ॥ पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां२अकल्पयन् ॥ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ॥ नैवेद्यं गृह्यतां देवि ! भक्तिं मेह्यचलां कुरु ॥

नैवेद्यं निवेदयामि नमः ॥

मध्ये-मध्ये आचमनीयं समर्पयामिनमः ॥ उत्तरापोषणार्थेपुनः पुनर्नैवेद्यं निवेदयामि नमः ॥ पुनराचमनीयं समर्पयामि नमः ॥

आचमनम् ॥

ॐ आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्म-मालिनीम् ॥
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥
ॐ यत्पुरुषेण हविषा देवा यज्ञ मतन्वत ॥
वसन्तोऽस्यासीदाज्यं ग्रीष्मइध्मःशरद्धविः ॥
आचम्यतां त्वया देवि ! भक्तिं मे ह्यचलां कुरु ॥
ईप्सितं मे वरं देहि परत्र च परां गतिम् ॥

आचमनं समर्पयामि नमः ॥

करोद्वर्तनम् ॥

करोद्वर्तनकं देवि ! सुगन्धैः परिवासितैः ॥
ईप्सितं मे वरं देहि परत्र च पराङ्गतिम् ॥
करोद्वर्तनार्थे गन्धं समर्पयामि नमः ॥

हस्त प्रक्षालनार्थे जलम् ॥

गन्धतोयं समानीतं सुवर्णकलशे स्थितम् ॥
हस्तप्रक्षालनार्थाय पानीयं ते निवेदये ॥

ऋतु फलम् ॥

ॐ याः फलिनीर्याअफलाअपुष्पा याश्चपुष्पिणीः ॥ बृहस्पति प्रसूतास्ता नोमुञ्चन्त्वर्ठ० हसः ॥ द्राक्षा खर्जूर कदली पनसाम्रकपित्थकम् ॥ नारिकेलेक्षुजंवादि फलानि प्रतिगृह्यताम् ॥ ऋतुफलानि समर्पयामि नमः ॥

ताम्बूल पुङ्गीफलम् ॥

ॐ तांमआवह जात वेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं प्रभूतिं गावो दास्योश्वान्विन्देयं पुरुषानहम् ॥ ॐ सप्ता-

स्या सन्परिधयस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञं तन्वाना-अवघ्नं पुरुषं पशुम् ॥ एलालवङ्गकस्तूरीकर्पूरैः पुष्पवासितां ॥ बीटिकां मुखवासार्थमर्पयामि सुरेश्वरि ! ॥

दक्षिणाद्रव्यम् ॥

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकआसीत् ॥ सदाधार पृथिवींद्यामुतेमां कस्मै देवाय हविषा विधेम ॥ पूजाफलसमृध्यर्थं तवाग्रे स्वर्णमीश्वरि !॥ स्थापिता तेन मे प्रीता पूर्णान्कुरु मनोरथान् ॥

ध्यानम् ॥

दुर्गे ! स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैःस्मृता मतिमतीव शुभां ददासि ॥ दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥ इति नत्वा॥ ॐ देवा आयान्तु यातुधाना अपयान्तु ॥ दुर्गे ! देवि ! यजनं रक्षस्वेति भूमौ प्रादेशं कृत्वा प्रयमेत् ॥

नव दुर्गा पूजनम् ॥ प्रथमं शैलपुत्री पूजनम् ॥

ॐ भूर्भुवः स्वः शैलपुत्रि ! इहागच्छ इहतिष्ठ ॥ शैलपुत्र्यै नमः शैलपुत्रीमावाहयामि स्थापयामि नमः ॥ पाद्यादिभिः पूजनं विधाय ॥ ॐ जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि ! ॥ पूजां गृहाण कौमारि ! जगन्मातर्नमोस्तुते ॥ १ ॥

ब्रह्मचारिणी पूजनम् ॥

ॐ भूर्भुवः स्वः ब्रह्मचारिणि ! इहागच्छ इहतिष्ठ ब्रह्मचारिण्यै नमः ॥ ब्रह्मचारिणीमावाहयामि स्थापयामि नमः ॥ पाद्यादिभिः पूजनं विधाय ॥ ॐ त्रिपुरां त्रिगुणाधारां मार्गज्ञानस्वरूपिणीम् ॥ त्रैलोक्यवंदितां देवीं त्रिमूर्तिं पूजयाम्यहम् ॥ २ ॥

चन्द्रघण्टा पूजनम् ॥

ॐ भूर्भुवः स्वः चन्द्रघंटे इहागच्छ इहतिष्ठ चन्द्रघंटायै नमः ॥



चन्द्रघंटामावाहयामि स्थापयामिनमः ।।पाद्यादिभिः पूजनंविधाय।। ॐ कालिकां तु कलातीतां कल्याणहृदयां शिवाम् ।। कल्याण-जननीं नित्यं कल्याणीं पूजयाम्यहम् ।। ३ ।।

कूष्माण्डा पूजनम् ।।

ॐ भूर्भुवः स्वः कूष्माण्डे इहागच्छ इहतिष्ठ कूष्माण्डायै नमः ।। कूष्माण्डामावाहयामि स्थापयामिनमः।। पाद्यादिभिः पूजनं विधाय ।। ॐ अणिमादिगुणोदारां मकराकारचक्षुषम् ।। अनन्त शक्ति भेदां तां कामाक्षीं पूजयाम्यहम् ।। ४ ।।

स्कन्दमाता पूजनम् ।।

ॐ भूर्भुवः स्वः स्कन्दमातः ! इहागच्छ इहतिष्ठ स्कन्दमात्रे नमः ।। स्कन्द मातरमावाहयामि स्थापयामि नमः ।। पाद्यादिभिः पूजनं विधाय ।। चण्डवीरां चण्डमायां चण्डमुण्ड प्रभञ्जिनीम् ।। तां नमामि च देवेशीं चण्डिकां पूजयाम्यहम् ।। ५ ।।

कात्यायनी पूजनम् ।।

ॐ भूर्भुवः स्वः कात्यायनि ! इहागच्छ इहतिष्ठ कात्यायन्यै नमः ।। कात्यायनीमावाहयामि स्थापयामि नमः ।। पाद्यादिभिः पूजनं विधाय ।। ॐ सुखानन्द करीं शान्तां सर्व देवैर्नमस्कृताम् ।। सर्वभूतात्मिकां देवीं शाम्भवीं पूजयाम्यहम् ।। ६ ।।

कालरात्री पूजनम् ।।

ॐ भूर्भुवः स्वः कालरात्रि ! इहागच्छ इहतिष्ठ कालरात्र्यै नमः ।। कालरात्रीमावाहयामि स्थापयामिनमः।। पाद्यादिभिः पूजनं विधाय।। चण्डवीरां चण्डमायां रक्तबीज प्रभञ्जिनीम् ।। तां नमामि च देवेशीं गायत्रीं पूजयाम्यहम् ।। ७ ।।

महागौरी पूजनम् ।।

ॐ भूर्भुवः स्वः महागौरि ! इहागच्छ इहतिष्ठ ।। महागौर्यै नमः ।। महागौरीमावाहयामि स्थापयामि नमः ।। पाद्यादिभिः

पूजनं विधाय ॥ ॐ सुन्दरीं स्वर्णवर्णाङ्गीं सुख सौभाग्यदायिनीम् ॥ सन्तोष जननीं देवीं सुभद्रां पूजयाम्यहम् ॥ ८ ॥

सिद्धिदा पूजनम् ॥

ॐ भूर्भुवः स्वः सिद्धिदे ! इहागच्छ इहतिष्ठ सिद्धिदायै नमः ॥ सिद्धिदामावाहयामि स्थापयामिनमः ॥ पाद्यादिभिः पूजनं विधाय ॥ ॐ दुर्गमे दुस्तरेकार्ये भयदुर्ग विनाशिनि ! ॥ पूजयामि सदा भक्त्या दुर्गां दुर्गतिनाशिनीम् ॥ ९ ॥

इति नव दुर्गा पूजनम् ॥

ज्योतिः पूजनम् ॥

ॐ भूर्भुवः स्वः आद्यासर्वसुरौजोद्भव तेजस्वरूप श्री दुर्गायै नमः ॥ ॐ जातवेदसे सुनवामसोममरातीयतो निदहाति वेदः ॥ सनः पर्षदति दुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः ॥ पाद्यादिभिः पूजनं विधाय ॥

ध्यानम् ॥

प्रधान साधार विकल्प सत्ता स्वभाव भावाद्भुवन त्रयस्य ॥ सा विद्यया व्यक्तमपीह माया ज्योतिः परा पातु जगन्ति नित्यम् ॥ ( योगिनी तंत्रे )

देश कालौ संकीर्त्य नव दुर्गा महोत्सवे ॥ श्री दुर्गा प्रसाद सिद्धि द्वारा सर्वापच्छान्ति पूर्वकं ममाभीष्ट सिद्धये निर्विघ्नतया परिसमाप्त्यर्थं बटुक गणेशादि सहितं कुमारी पूजनं करिष्ये ॥

गणेश—बटुक सहित नव कुमारी[1] (कन्या) पूजनम् ॥

वायव्यकोण से प्रारम्भ करके ईशान कोण पर्यन्त आसन बिछाना तिनके ऊपर प्रथम गणेश दूसरा बटुक और नवकुमारियों को बिठाकर पाद्यादि से पूजन करना ॥ यदि ९ कुमारी पूजन की शक्ति न होवे वा न-मिलें तो १ । ३ । ५ । ७ । ९ । गणेश बटुक सहित का पूजन करना ॥

---

१ अथ कुमारी पूजा तत्प्रकारश्च देवीपुराणे ॥ ब्रह्मोवाच ॥ न तथा तुष्यते शक्र ! होमदान जपेन तु ॥ कुमारी भोजनेनात्र यथा देवी



गणेश पूजनम् ॥

ॐ गं गणपतये नमः ॥ पाद्यादि पूजनं विधाय ॥

ध्यानम् ॥

ॐ उद्यद्दिनेश्वर रुचिं निज हस्त पद्मैः ॥
पाशांकुशाभय वरान्दधतं गजास्यम् ॥
रक्ताम्बरं सकल दुःख हरं गणेशं ॥
ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥ १ ॥

---

प्रसीदति ॥ अत्र नवरात्रे—प्रक्षाल्य पादौ सर्वासां कुमारीणां च वासव। सुलिप्ते भूतले रम्ये तत्र ता आसने स्थिताः ॥ पूजयेद्गन्धपुष्पैश्च स्रग्भिश्चापि मनोरमैः ॥ पूजयित्वा विधानेन भोजनं तासु दापयेत् ॥ खण्डं लड्डु गुडं सर्पि दधिक्षीरं समाक्षिकम् ॥ तासां देयं कुमारीणां शनैस्संभोजयेत्तु ताः ॥ पानीयं याचितं देयमन्नं वा याचितं शुभम् ॥ तास्तृप्तास्तु यदा सर्वास्तदा त्वाचमनंददेत् ॥ आचम्य चाक्षतान्दत्वा त्वया क्षन्तव्य मित्युत ॥ दातुः शिरसि दातव्याः कन्यकाभिरथाक्षताः ॥ तेनापि प्रणिपातस्तु कर्तव्यो भक्ति पूर्वकः ॥ अनेन विधिना शक्र! देवी क्षिप्रं प्रसीदति ॥ ददाति विविधान्कामान्मनोभीष्टान्सुराधिप! ॥ राज्यं कृत्वा ततः पश्चाद्देवीलोकञ्च गच्छति ॥ स्कान्देऽपि ॥ एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च ॥ द्विगुणं त्रिगुणं वापि प्रत्येकं नवकं वरम् ॥ नवभिर्लभते भूमिमैश्वर्यं द्विगुणेन तु ॥ एक वृद्ध्या लभेत्क्षेम-मेकैकेनश्रियंलभेत् ॥ एकवर्षा तु या कन्या पूजार्थं तां तु वर्जयेत् ॥ गन्ध पुष्प फलादीनां प्रीतिस्तस्या न विद्यते ॥ यथोक्ताऽलाभेतु विवाहि-तापि या पुष्पिणी तावत् पूज्या विवाहान्तरमपि कन्यात्वमुपजायते।' तावत्संपूज्यते कन्या यावत्पुष्पं न दृष्यते ॥ इति भगवन्त भास्कर कृत देवी पुराणवचनात् ॥ कामना परत्वेन आसां क्रमेण पूजायां विशेष उक्तः ॥ तत्रैव ॥ दुःख दारिद्र्य नाशाय शत्रूणां नाशनाय च ॥ आयुषे बल वृद्ध्यर्थं कुमारीः पूजयेन्नरः ॥ आयुष्कामस्त्रिमूर्तिं तु त्रिवर्गस्य फलाप्तये ॥ अपमृत्यु व्याधि पीड़ा दुःखानामपनुत्तये ॥ सौख्य धान्य-धनारोग्य पुत्र पौत्रादि वृद्धये ॥ कल्याणीं पूजयेद्धीमान्नित्यं कल्याण वृद्धये ॥ आरोग्य सुख कामी तु धन कामस्तथैव च ॥ यशस्कामी नरोंनित्यं रोहिणीं परिपूजयेत् ॥ विद्यार्थी च जयार्थी च राज्यार्थी च विशेषतः ॥

ॐ खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं,
प्रस्यन्दन्मद गन्धलुब्ध मधुप व्यालोल गण्डस्थलम् ॥
दन्ताघात विदारितारिरुधिरैः सिन्दूर शोभाकरं,
वन्दे शैलसुता सुतं गणपतिं सिद्धिप्रदं कामदम् ॥ २ ॥

वटुक पूजनम् ॥

ॐ वं वटुकाय नमः ॥ पाद्यादि पूजनं विधाय ॥

ध्यानम् ॥

ॐ कर कलित कपालः कुण्डली दण्डपाणिस्तरुण तिमिर नील व्याल यज्ञोपवीती ॥ क्रतु समय सपर्या विघ्नविच्छेद हेतुर्जयति वटुकनाथः सिद्धिदः साधकानाम् ॥

तत्रविधिः ॥

यजमानः पूजयेच्च कन्यानां नवकं शुभम् ॥ द्वि वर्षाद्याद-शाब्दान्ताः कुमारीः परि पूजयेत् ॥ १ ॥ अर्थादेक हायनाल्प-

---

शत्रूणां च विनाशार्थी कालिकां पूजयेन्नरः ॥ संग्रामे जय कामश्च चण्डिकां परिपूजयेत् ॥ दुःख दारिद्रय नाशाय नृप सम्मोहनाय च ॥ महापाप विनाशाय शाम्भवीं च प्रपूजयेत् ॥ सर्व लोकेषु शत्रूणामुग्र-साधन कर्मणि ॥ दुर्गा दुर्गार्ति नाशाय पूजयेद्यत्नतो बुधः ॥ सौभाग्य धन धान्यादि वांछितार्थ फलाप्तये ॥ सुभद्रां पूजयेन्मर्त्यो दासी दास विवृद्धये ॥ पूजा प्रकारश्च तत्रैव ॥ प्रातः काले विशेषेण कृताभ्यङ्गो विशेषतः ॥

॥ अथ वर्ज्य कन्या आह ॥

हीनाधिकाङ्गीं कुष्ठादि विकारां कुकुलां तथा ॥ ग्रन्थि स्फुटित सर्वाङ्गीं रक्त पूय व्रणाङ्कितां ॥ जात्यन्धां केकरां काणां कुरूपां तनु रोमशाम् ॥ संत्यजेद्रोगिणीं कन्यां दासी गर्भ समुद्भवाम् ॥

अथ ज्ञाति भेदेन कामना भेदेषु तत्पूज्यतामाह ॥ ब्रह्माणीं सर्व कार्येषु जयार्थे नृप वंशजाम् ॥ लाभार्थे वैश्य वंशोत्थां सुतार्थे शूद्र वंशजाम् ॥ दारुणे चान्त्य जातीयां पूजयेद्विधना नरः ॥

अथ वर्ण भेदेन पूजाभेदः ॥ गौरीं सर्वेष्ट संसिद्ध्यै पीताङ्गी जय कीर्तये ॥ लाभार्थेऽरुणवर्णाङ्गीमसितामारणादिष्वित क्वचित् ॥ एक वंश समुद्भूतां कन्यां सम्यक् प्रपूजयेदिति ॥ कौलावली तन्त्रे ॥

## ❀ कलश स्थापने ❀

### घटार्गलयन्त्रम् ॥

“दुर्गार्चन सृतौ” शारदायां नवमपटले ॥

श्लो० ९५ तः १०० पर्यन्तम ॥

अग्नि कोणे नमः

| पूर्व |




इस यन्त्र के ऊपर कलश व दीपक स्थापन करना चाहिये ।

नोट— अग्नि कोण में नमः बिगड़ गया है, कृपया उसे बना लें ।



वयस्का वर्ज्याः ॥ ता आसने उपवेश्यावाहयेत् मन्त्रेण ॥ अथ-आवाहन मन्त्रः ॥ ॐ मन्त्राक्षर मयीं लक्ष्मीं मातृणां रूप धारिणीम् ॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥ अनेनैव मन्त्रेण नवापि आवाहयेत् ॥ अशक्ता यथाशक्ति एकामपि पूजयेत् ॥ पाद्यादि पूजनं विधाय ॥

द्विवर्षा कुमारी संज्ञा ॥

सर्वस्वरूपे ! सर्वेशे ! सर्वशक्ति स्वरूपिणि ! ॥ पूजां गृहाण कौमारि ! जगन्मातर्नमोस्तु ते ॥ १ ॥

त्रिहायनी त्रिमूर्ति संज्ञा ॥

त्रिपुरां त्रिपुराधारां त्रिवर्ग ज्ञान रूपिणीम् ॥ त्रैलोक्य वन्दितां देवीं त्रिमूर्तिं पूजयाम्यहम् ॥ २ ॥

चतुरब्दा कल्याणी ॥

कलात्मिकां कलातीतां कारुण्य हृदयां शिवाम् ॥ कल्याण जननीं देवीं कल्याणीं पूजयाम्यहम् ॥ ३ ॥

पंचवर्षा रोहिणी ॥

अणिमादि गुणाधारामकाराद्यक्षरात्मिकाम् ॥ अनन्तां शक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥ ४ ॥

षडब्दा कालिका ॥

कामचारां शुभां कान्तां कालचक्र स्वरूपिणीम् ॥ कामदां करुणोदारां कालिकां पूजयाम्यहम् ॥ ५ ॥

सप्तहायनी चण्डिका ॥

चण्डवीरां चण्डमायां चण्ड मुण्ड प्रभंजनीम् ॥ पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ॥ ६ ॥

अष्टवर्षा शांभवी ॥

सदानन्दकरीं शान्तां सर्व देव नमस्कृताम् ॥ सर्व भूतात्मिकां लक्ष्मीं शाम्भवी पूजयाम्यहम् ॥ ७ ॥

नवहायनी दुर्गा ॥

दुर्गमे दुस्तरे कार्ये भवदुःख विनाशिनीम् ॥ पूजयामि सदा भक्त्या दुर्गां दुर्गार्ति नाशिनीम् ॥ ८ ॥

दशवर्षा सुभद्रा ॥

सुन्दरीं स्वर्ण वर्णाभां सुख सौभाग्यदायिनीम् ॥ सुभद्र-जननीं देवीं सुभद्रां पूजयाम्यहम् ॥ ९ ॥

नित्य आरती यहाँ करना ॥

कुमारी पूजनान्ते तद्धस्तादक्षतादिकं स्वशिरसि विधाय भक्त्या अनुव्रजेत् सुवासिनीं— ब्राह्मणान् भोजयेत् पश्चात् इष्ट-मित्र बांधवादिना सह स्वयमपिभुंजीत शेष कालं गीत वाद्यादि-भिर्नयेत् ॥

इति कुमारी पूजनम् ॥

अष्ट रात्रे न दोषोऽयं नवरात्रे तिथिक्षये ॥ सूतके पूजनं प्रोक्तं जपदानं विशेषतः ॥ देवी मुद्दिश्य कर्त्तव्यं तत्र दोषो न विद्यते रजस्वलां तथाशौचे ब्राह्मणैश्च सुपूजयेत् ॥ सभर्तृकाणां स्त्रीणां नवरात्रे गंधादि सेवनं न दोषाय ॥ तदुक्तं हेमाद्रौ ॥ गंधालंकार ताम्बूल पुष्पमाल्यानुलेपनैः ॥

कुमारी पूजने विशेषः कौलावली तन्त्रे ॥

एवं प्रणवयोगेन चैतन्यं तत्तुमर्चयेत् ॥ वाणी माया तथा लक्ष्मीर्माया कूर्चद्वयं ततः ॥ एते च प्रणवाः ज्ञेया कुमार्याः परि पूजने ॥ चतुर्दश स्वरेणाढ्यो भृगुर्विन्द्विन्दु संयुतः ॥ चैतन्य बीजं कथितं साधकानां समृद्धिदम् ॥ एवं द्वाभ्यां त्रिभिश्चैव सप्तधानवधा पुनः ॥ नित्य क्रमेण नियतं पूजयेद्विधि पूर्वकम् ॥ वाग्भवेन जलंदेयं मायया पादशौचकम् ॥ लक्ष्म्याचार्घ्यं प्रदद्यात्तु कूर्चबीजेन चन्दनं ॥ शक्ति बीजेन पुष्पाणि धूपं षष्ठेन दापयेत् ॥ वाग्भवेन पुरक्षोमं मायया च गुणाष्टकम् ॥ श्री बीजेन श्रियोलाभः मायया शत्रु संक्षयः ॥ भैरवेण तु बीजेन षण्डत्वमनुगच्छति ॥

न्यासादिकं प्रकुर्वीत् आदौस्वीय क्रमेण तु ॥ कुमार्याङ्गे ततः पश्चाद्विशेषन्यासमुत्तमम् ॥

ततोऽखण्ड दीपदानम् ॥ दीपादि विचारो डामर तन्त्रे ॥

सौवर्णं राजतं ताम्रं कांस्यं लोहं च मार्तिकम् ॥ गोधूम माष मुद्गानां चूर्णेन घटितं तथा ॥ सौवर्णे कार्यसिद्धिः स्याद्रौप्ये वश्यंजगद्भवेत् ॥ ताम्रंतयोरभावेऽपि कांस्ये विद्वेषणंभवेत् ॥ मारणं लोहपात्रेस्यादुच्चाटो मृण्मये तथा ॥ गोधूम-चूर्ण घटिते विवादे विजयो भवेत् ॥ माषजे शत्रुसंस्तंभो मौद्गेस्याच्छान्तिरुत्तमा ॥ सन्धिकार्ये नदीकूलद्वयमृत्स्ना समुद्भवम् ॥ अलाभेसर्व पात्राणां कुर्यात्ताम्रं च मार्तिकम् ॥

सुवर्णादिजे दीपे सुवर्णादिमानं तत्रैव ॥

सहस्र पल संख्यायां पात्रं शतपलैः स्मृतम् ॥ शतार्द्धपलमानेतु त्रिंशतापात्रमुत्तमम् ॥ पादोनशत संख्यायां षष्टिकं पात्र मुच्यते ॥ शतमानेतदर्द्धंतदधिकं पल संयुतम् ॥ सहस्र संख्यके प्रोक्तं दिग्पले दिग्पलं स्मृतम् ॥ नित्य दीपे प्रमाणं हि पलैः सप्तभिरम्बिके ! ॥

अथ दीप स्वरूपम् ॥

बुघ्नेषडंगुलं प्रोक्तमुच्छ्राये च षडंगुलम् ॥ षोड़शांगुल मायामं सुन्दरं पात्रमुत्तमम् ॥ नित्य दीपेतदर्द्धार्द्धं मानं सर्वेषु कर्मसु ॥ (बुघ्नं-मूलम्) अथ घृत तैलयोर्विशेषस्तत्रैवोक्तः ॥ गोघृतेन प्रकर्तव्यो दीपः सर्वार्थ सिद्धये ॥ मारणेमाहिषं प्रोक्तमुष्ट्रं विद्वेषणे भवेत् ॥ आविकं शान्तिके प्रोक्तमाजं चोच्चाटने भवेत् ॥ तिलतैलेन वा दीपः कार्यः सर्वार्थ सिद्धये ॥ घृताभावे महेशानि ! मारणे सार्षपेण चेति ॥

अथ वर्तिः ॥

अयुग्मा वर्तिका ग्राह्या एकोत्तर शतावधि ॥ गुरुकार्येऽधिका प्रोक्ता अल्पे अल्पा मता प्रिये ! ॥ सूत्रं श्वेतं तथा पीतं मांजिष्ठं

च कुसुम्भकम् ॥ कृष्णं च कर्वुरं चेति ष कर्मसु नियोजयेत् ॥ सर्वाभावे सितेनैव कुर्याद्वर्त्तीः पृथक् पृथक् ॥

अथ चालनार्थं शलाकापि तत्रैव ॥

षोड़शांगुल माना च सौवर्णातु शलाकिका ॥ राजतौदुम्बरी वापि सुलक्षा बुघ्नका तथा ॥ तीक्ष्णाग्रा सरला मध्ये त्रिशूलेनाङ्किता तथेति ॥

अथ दीपमुखं तत्रैव ॥

पूर्वाभिमुखे तु सर्वाप्तिः स्तम्भोच्चाटनयोस्तथा ॥ रक्षा विद्वेषयोः कार्यं पश्चिमास्यं प्रदीपकम् ॥ लक्ष्मी प्राप्तावुत्तरास्यं मारणे दक्षिणामुखमिति ॥

अथ दीप दाने प्रतिज्ञा ॥

तत्र पूर्वं कलशाग्रे *घटार्गल यन्त्रं षट्कोण यन्त्रं वा विलिख्य ॥ तिथि वाराद्युच्चार्य ॥ अद्येहैतद्दीप शिखा सम संख्य वर्ष सहस्रावच्छिन्न समयपरिच्छिन्न दुर्गानुचरत्व प्राप्ति पूर्वक भगवती प्रीति कामोऽद्यारभ्य नवम्यन्तमहर्निश वातादि दोष रहितमिमं दीपं श्री दुर्गा देवताकं श्री दुर्गायाः पुरतः प्रज्वालयिष्ये ॥ इति प्रतिज्ञाय ॥ उक्त कामेषु तत्तत्कामनामुच्चार्योक्त विधिना दीपं दत्वा तं गंधाक्षतादिभिः पूजयेत् ॥

दीप स्थापने शकुन विघ्नादयो डामर तन्त्रे ॥ तथाहि ॥

दीपस्य शकुनान्वच्मि शृणु देवि ! यथाक्रमम् ॥ येन विज्ञात मात्रेण जायते च फलाफलम् ॥ दीपारम्भे सुरेशानि ! नवदेदशुभं वचः ॥ तस्मिन्काले यदुक्तं हि तत्तथैव भवेद्ध्रुवम् ॥ वर्जयेदशुभां वाणीं तस्मिन्काले विशेषतः ॥ रक्ताम्बरो द्विजोऽन्यज्ञो रक्तमाल्यानुलेपनः ॥ दीपारम्भे समायाति तस्य सिद्धिर्न संशयः ॥ शूद्र वर्णः समायाति सिद्धः प्रोक्तातु मध्यमा ॥ म्लेच्छस्य दर्शने

*घटार्गल यन्त्र प्रकारः ॥ शारदायां ६ पटले ६५ श्लोके ॥ चित्र देखो ॥

## ❀ कलश स्थापने ❀

### घटार्गलयन्त्रम् ॥

"दुर्गार्चन सृतौ" शारदायां नवमपटले ॥

श्लो० ९५ तः १०० पर्यन्तम् ॥

अग्नि कोणे नमः

। पूर्व ।

उत्तर



दक्षि

पश्चिम

**इस यन्त्र के ऊपर कलश व दीपक स्थापन करना चाहिये ।**

नोट अग्नि कोण में नमः बिगड़ गया है, कृपया उसे बना लें ।

प्रोक्तं बंधनं दीपदस्य वै ।। मार्जार मूषकादीनां मध्यमं दर्शनं स्मृतम् ।। कृते दीप वरे देवि ! वीक्ष्यते च शुभाशुभम् ।। दीप-ज्वाला समाश्लक्ष्णा जायते यदि सुन्दरि ! ।। अष्टभिर्दिवसैस्तस्य कार्यसिद्धिर्भवेद्ध्रुवम् ।। दीप ज्वाला तु देवेशि ! यदि वक्रा भवेत्तदा ।। नाशस्तस्य च बन्धूनां प्रोक्तः सर्वार्थ नाशकः ।। खरकङ्क प्रभाज्वाला यदि स्याच्चसुरेश्वरि ! ।। दीपकर्तुः सविघ्नो वै मरणं जायते ध्रुवम् ।। दीप ज्योत्स्नाम्बिके ! कृष्णा जायते च सुरार्चिते ! ।। शत्रूणां जायते कार्यं दीपकर्तुर्निरर्थकम् ।। कृते दीपे-यदानाशस्तत्क्षणाज्जायतेऽम्बिके! ।। कार्यसिद्धिर्विलम्बेन भविष्यति न संशयः ।। कृत दीपस्य नाशःस्यात्प्रहरत्रय मध्यतः ।। मासे वर्षे तथा प्रोक्ता कार्य्य सिद्धिर्हि सुन्दरि ! ।। दीपवर्यस्य नाशः स्याद्यदि रात्रौ कदाचन ।। तस्य गेहे धनं वस्तु नष्टं भवति निश्चितम् ।। दत्ते दीपे यदि पुनश्चट चटेति ध्रुवम्भवेत् ।। तदा तस्य च कार्यं वै नष्टंयाति तथादिशेत् ।। वमतेदीपवर्य्यश्चेच्चौ-रतोभयमाददेत् ।। दीपपात्रं यदि पुनः स्रवते देवि ! सुन्दरि! ।। गोनाशो जायते तस्य दीप कर्तुर्न संशयः ।। दीपवर्यस्य पात्रं वै भग्नं वै दृश्यते यदि ।। अष्टादश दिनादर्वाग्यजमानः सबांधवः ।। श्राद्धदेवस्य सदनं गच्छति प्रिय कामिनि ! ।। दीपेनष्टे पुनर्दीपं-ज्वालयेन्मूढ चेतनः ।। दीप दाता दीप कर्ता मन्द चक्षुर्भवेत्सदा ।। कृते दीपे पुनर्वार्ता कारयेद्यदि मानवः ।। कार्य्य सिद्धि र्हि देवेशि! षण्मासात्स्यादनन्तरम् ।। प्रज्वालितं दीपवर्य्यमशुचिर्मानवः स्पृशेत् ।। दीपकर्तुः शरीरे तु व्याधिर्वै जायते नृणाम् ।। दीप-काष्ठाशुभे! श्वानो मार्जारो मूषकादयः ।। यदि स्पृशन्ति कल्याणि ! ताडनं राजतो दिशेत् ।। एवं दीपवरे विघ्नाः वहवः संभवन्ति हि ।। तस्माद्दीपं सुरेशानि ! विलोक्यं तु पदे पदे ।।

अथ दीपविघ्ने शान्तिः ॥

तत्र शर्कराज्य तिलतंडुलैस्सघृतैः कमलैर्वा जयंती मंत्रेण दशांशतो होमं कुर्यादित्यन्ये ॥ नवार्ण मन्त्रेणेत्यपरे ॥ देवि ! प्रहरार्ति हरे प्रसीदेति, देवि ! प्रसीदेति, करो तु सानः शुभेति मन्त्राणामन्यतमेन पूर्वोक्त द्रव्येण होमः कार्य इति साम्प्रदायिकाः॥

कलश विसर्जन विधिः ॥

स यजमानो स्वस्ति वाचन पूर्वकं संकल्पं विधाय ॥ देश कालौ संकीर्त्य प्रतिपदि गणपत्यादि स्थापितानां देवानां नारिकेल बलिसहित उत्तर पूजन महं करिष्ये ॥ इति प्रतिज्ञां कृत्वा यथोपचार सहितं गणपत्यादि देवान् प्रपूज्य ॥ ततो शुद्ध नारिकेलं, कूष्मांडं वा गृहीत्वा तं संपूज्य तत्र जीव न्यासादिकं कृत्वा ॥ ॐ महामाये ! जगन्मातः सर्व काम प्रदायिनि ! ॥ ददामि नारिकेल ( कूष्मांड ) *बलिः प्रसीद वरदाभव ॥ अर्द्ध भागं देव्यग्रे संस्थाप्य पुनः ॐ प्राणाय स्वाहा ॥ ॐ अपानाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ ॐ व्यानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥ एभिः स्वाहान्त मन्त्रैः पंचाहुतिं ज्योतिरग्नौ जुहुयात् ॥

तत्र यथा कुलाचारमष्टम्यां नवम्यां दशम्यां वा देवी पूजान्ते तां प्रणम्य पुष्पाण्यादाय कृतांजलिः ॥ कुछ महानुभाव यहाँ कलश के ऊपर स्थापित नारियल का बलि देते हैं यह शास्त्र विरुद्ध है ।

*अथ बलिदानम् ॥ १ ॥

अत्र पक्षत्रयं प्रत्यहञ्च बलिन्दद्यादित्येकः ॥ कन्या संस्थे रवौ शक्र ! शुक्लाष्टम्यां प्रपूज्य च ॥ द्रोण पुष्पैश्च बिल्वाम्र जाती पुन्नाग चम्पकैः ॥ पश्चाहं लक्षणोपेतं गन्ध पुष्प समन्वितम् ॥ विधिवत्कालि ! कालीतिजप्त्वा खड्गेन घातयेदिति ॥ देवी पुराण वचनादष्टमी नवम्योरिति द्वितीयः ॥

---

*टिप्पणी निरुत्तर तंत्रे । पूजया लभते पूजां जपात्सिद्धिर्न संशयः ॥ होमेन सर्वसिद्धि स्यात्तस्मात्त्रितयमर्चयेत ॥

‡ बलिहीने तु दुर्भिक्षं गन्धहीने त्वभाग्यताम् ॥
धूपहीने तथोद्वेगं वस्त्रहीने धनक्षयम् ॥ —भविष्ये ॥

ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ॥ उपप्रयन्तु मरुतः सुदानवऽइन्द्र प्राशूर्भवासचा ॥ १ ॥ ॐ ब्रह्मणस्पते त्वमस्य-यन्तासूक्तस्य बोधितनयंच जिन्व ॥ विश्वन्तद्भद्रं यदवन्ति-देवाबृहद्वदेमविदथे सुवीराः ॥ यऽइमाविश्वा विश्व कर्म्मयोनः पिताऽपतेनो देहि ॥ २ ॥

सर्व रूपमयी देवी सर्वं देवीमयं जगत् ॥ अतोऽहं विश्वरूपां त्वां नमामि परमेश्वरीम् ॥

विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ॥ पूर्णं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि ! ॥ मातः क्षमस्वेत्युक्त्वा ॐ

---

नवम्यां बलिदानञ्च कर्तव्यं वै यथाविधीति ॥ नवम्यां च विधानाच्छिष्ट समाचाराञ्च नवम्यामेव कार्यमिति तृतीयः पक्षः ॥ अत्रदेशाचारात्कुला-चाराद्वा पक्षत्रयान्यतमः पक्ष आदरणीयः ॥ अत्रापि पक्षत्रयं पूर्व पक्षे पक्षत्रयं प्रतिपदमारभ्यनवम्यन्त प्रत्यहं* पूजाजप होम †बलिदानाद्यनु-ष्ठानमित्येकः ॥

प्रतिपत्तः सप्तम्यन्तं केवलं पूजा जप बलिदानाद्यनुष्ठानमष्टम्यान्तु सहोममिति द्वितीयः ॥ प्रतिपतोष्टम्यन्तं प्रत्यहं केवलं जप बलिदानाद्य-नुष्ठानं नवम्यां सहोममिति तृतीयः ॥ अत्र पूर्व पक्षमाश्रित्य बलिदानस्य प्राथम्यमङ्गी कृतमुर्वरित पक्षाश्रयणे तु यत्रोचितं तत्रैव कार्यम् शिष्टैरिति ॥

अथ बलिदान प्रकारः

तत्र स्वस्तिवाचनं कृत्वा पशुमानीयाञ्जलिम्बध्वा ॥ प्राणिनामुप-कारार्थं पशुश्रेष्ठ मयाधुना प्रोक्षितश्चण्डिका प्रीत्या मामात्मानञ्च तारये-दितिपठेत् । ततोमेघाकार स्तम्भमध्ये पशुबन्धेन्बध्वा ॥ उत्तराभिमुखो भूत्वा बलिं पूर्व मुखं तथेति ॥

कालिका पुराणे ॥

पूर्व मुखं पशुं शंखोदकेन स्नापयेत् ॥ वाराही यमुना गङ्गा करतोया सरस्वती ॥ कावेरी चन्द्र भागा च सिन्धु भैरव सागराः ॥ छाग स्नाने महेशानि ! सान्निध्यं कल्पयन्त्विहेतिमन्त्रेण ॥ ततः कुशोदकेन प्रोक्षयेत् ॥ सुरास्त्वां वसवो रुद्रा विमानोत्तम चारिणः ॥ ब्रह्मा लोकेश्वराः साध्या अश्विनेयौभिषग्वरौ ॥ एतेचान्ये च ऋषयः प्रोक्षन्तु त्वां कुशोदकैः ॥ एवं प्रोक्ष्य ॥

दुर्गायैनमः ॥ इत्यैशान्यामेक पुष्पंनिक्षेपेण विसर्जयेत् ॥ ततो-स्थापित कलशोदकेन यजमानाभिषेकः ॥ ततोमृदादिमूर्ति सत्वे-स्रोतसि तत्प्रवाहणं कर्तुमुत्थापयेत् ॥

ॐ उत्तिष्ठ देवि ! चण्डेशि ! शुभां पूजां प्रगृह्य च ॥ कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥ ३ ॥ गच्छ गच्छ परं

---

पशोरङ्गेषु न्यासं कुर्याद्यथा ॥

वाचं ते शुन्धामि प्राणन्ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रन्ते शुन्धामि नाभिन्ते शुन्धामि मेढ्रन्ते शुन्धामि पायुन्ते शुन्धामि चरित्रांस्ते शुन्धामि योनि ते क्रूराणि तानि तेसह महोभ्यः प्रोक्षन्तु स्वाहा ॥

शिरो ललाटं हृदये च कर्णौ नाभिश्चकण्ठं गुरुसेफसीच ॥ क्रोडंच पादांश्च तथान्यदङ्गं मुञ्चन्तु शीघ्रं पशु दैवतानि ॥ पशुयोनि प्रसूतोसि बलियोग्य विवृद्धये ॥ विमुच्य रोम कूटानि शीघ्रं गच्छन्तु देवताः ॥ इति ॥ तत्रस्थान्देवानुद्वास्य ॥ पंचोपचारैश्छाग पूजां कृत्वा शृङ्गयोः सिन्दूरमालिप्य माल्यानिबध्नीयात् ॥ ततोऽग्नि दैवतं पशुं दुर्गा प्रीति जनकं विभाव्य सर्वाङ्गे पिशिताशिन्यैनमः ॥ इत्यङ्गानि विशोध्य ॥ पशुरुत्पादितो देवैर्यज्ञार्थेषु विधानतः ॥ धर्मार्थ काममोक्षार्थं पशो ! त्वां घातयाम्यहम् ॥ इति तं संप्रार्थ्य ॥ तत उत्तराभिमुखस्तत्कर्ता दक्षिण कर्णं धृत्वा पठेत् ॥ पशु ! त्वं बलिरूपेण मम भाग्यादुपस्थितः ॥ प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥ चण्डिका प्रीति दानेन दातुराप-द्विनाशनम् ॥ चामुण्डा बलिरूपाय वले ! तुभ्यं नमोस्तुते ॥ यज्ञार्थं पशवः सृष्टा स्वयमेव स्वयम्भुवा ॥ अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोवधः ॥ ऐं ह्रीं श्रीं इति मन्त्रेणमत्स्वरूपं विचिन्तयित्वातन्मूर्द्ध्नि पुष्पं न्यस्य तत्र भैरवमभिषिंच्य दक्षिण करं धृत्वा ॥ छागल ! त्वं महावाहो अग्नेर्देवस्य वाहनः ॥ पशो ! त्वद्बलिदानेन तुष्टामेस्तु हरेःप्रिया ॥ इदं रूपं परित्यज्य गन्धर्वत्वमवाप्नुहि ॥ सर्व काम प्रदानाय छागलाय नमोनमः ॥ इति पठेत् ॥ ततो दक्षिण कर्णं गृहीत्वा ॥ ॐ अद्येहामुक गोत्रस्य अस्य यजमानस्य सर्ववाधा प्रशमनं धन धान्य समृद्धिमत्व वपुरारोग्याचल लक्ष्मी प्राप्ति हेतुक पशु रोममित वर्षानवरत देवी लोक सुख सन्तति प्राप्ति कामः कात्यायनीय गोत्रायै भगवत्यै महामूर्त्यै श्री दुर्गायै इमं छागं ( कूष्माण्डं नारिकेलंवा ) सुस्नापितमग्नि दैवतंघातयिष्ये ॥इति संकल्प्य॥ पशुगायत्रीं पठेत् ॥ ॐ पशुराजाय विद्महे महादेवाय धीमहि तन्नो दुर्गा

स्थानं स्वस्थानं देवि ! चण्डिके ! ॥ अजस्रोतो जलंवृद्ध्यै स्थीयतां च जलेत्विह ॥४॥ ॐ दुर्गे ! देवि ! जगन्मातः स्वस्थानं गच्छ पूजिता ॥ सम्बत्सरे व्यतीते तु पुनरागमनाय वै ॥५॥ इमां

---

प्रचोदयात् ॥ छागेतु ॥ ॐ छागलाग्नि दैवताय विद्महे शिरश्छेदाय धीमहि तन्नश्छागः प्रचोदयात् ॥ इत्येवं पठित्वा ॥ इमं छागं ( बलिं ) गृहाणत्वं शक्ति हेतोर्दिवौकसाम् ॥ शत्रु दर्प विनाशाय सर्वाभीष्ट प्रसिद्धये ॥ इति देव्यै निवेद्य ॥

ततः 'शृङ्ग' गृहीत्वा ॥ छागशृङ्ग गृहीतोसि पशुत्वं विप्रहीयतामितिपठेत् ॥

ततः खड्ग पूजा ॥

तत्र प्रतिज्ञां पूर्ववत्कृत्वा ॥ नन्दकस्व परामूर्ते, ममशत्रुनिवर्हण ॥ नीलोत्पलदल श्यामकृत्स्न दुःस्वप्न नाशन ॥ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥ श्री गर्भो विजयश्चैव धर्माधारस्तथैवच ॥ इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ॥ नक्षत्रं कृतिका तन्तुगुरुर्देवो महेश्वरः ॥ रोहिण्यश्च शरीरं ते दैवतं च जनार्दनः ॥ पिता पिता महोदेवस्त्वां मां पालयतात्सदा ॥ इयं येन धृता क्षोणी हतश्च महिषासुरः ॥ तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥ अग्र्यः प्रहरणानां त्वं खड्गो माद्रवतीसुतः ॥ ॐ ह्रां ह्रीं खड्ग इतिध्यात्वा ॥ ततोर्घ्यादि दत्वा ॥ ॐ कालि ! कालि ! यज्ञेश्वरि ! लोहदण्डायै नमः ॥ मुष्टि देशे सरस्वती ब्रह्मभ्यां नमः ॥ मध्ये लक्ष्मी नारायणाभ्यां नमः ॥ अग्रे उमामहेशाभ्यां नमः ॥ इति पंचोपचारैः सम्पूज्य ॥ ॐ आं ह्रीं फट् इति मंत्रेण विमलं खड्गं गृहीत्वा ॥ एक हस्तेन द्वाभ्यां वा एक च्छेदेनघातयेत् ॥ ततः खर्परं गृहीत्वा ॥ देशकालादि स्मृत्वा दुर्गायै इमं छाग खर्परं मांस सहितं नानोपकरणान्वितं तुभ्यमहंसप्रददे ॥ पयोमध्वाज्य सत्खण्ड भक्ष्य द्रव्य फलैर्युतम् ॥ खर्प्परं गृह्ण चामुण्डे ! सदीपं मांस संयुक्तम् ॥ इति दत्वा ॥ तदुत्थं रुधिरं गृहीत्वा नैर्ऋतेभ्यः प्रदातव्यम् ॥ महा कौशिकमंत्रितमिति वचनात् ॥ ॐ ऐं ह्रीं कौशिक्यै नमो रुधिरेणाप्यायता मिति सनैर्ऋतायै तस्यै सदीपं दद्यात् ॥ अत्र ये ह्युपयुज्यन्ते प्राणिनो महिषादयः ॥ ते सर्वे स्वर्गतिं यान्ति हन्ता पापं न विन्दति ॥ यावन्न चालयेद्गात्रं पशुस्तावन्न हन्यते ॥ इति चण्डिका बलिदाने तु सर्वत्रैवं विधिस्मृतः ॥ इति छेदानिष्टे सुवर्णं देयम् ॥ इदञ्च बलिदानमग्निषोमीय पशु हिंसा न्यायेन धर्म्यमपि क्षत्रियादि विषय-

**पूजां मयादेवि ! यथा शक्त्योपपादिताम् ॥ रक्षार्थं त्वं समादाय व्रजस्थानमनुत्तमम् ॥ ६ ॥**

इति स्रोतसि प्रवाह्य तन्मना गृहमेत्य हस्तौ पादौ प्रक्षाल्याचम्य पूजा स्थाने यजमानः सपरिवार उपविश्य विप्रभोजनादि समाप्य बन्धुभिः सहभुंजीत ॥

---

मेवतदेतत्स्पष्टमुक्तं॥ देवी पुराणे ॥ तदर्द्धयामिनीशेषे विजयार्थं नृपोत्तमः॥ पश्चाहं लक्षणोपेतं गन्ध धूप सृगर्चितम् ॥ विधिवत्कालि ! कालीति जप्त्वा खड्गेन घातयेदिति ॥ ब्राह्मणस्यतु सात्विकी जप यज्ञाद्यनैंवेद्यैश्च निरामिषैरित्युक्तेर्जपादि रूपा सात्विक्येव पूजा भवति तस्य सात्विक कर्मण्येवाधिकारस्य श्रुति स्मृत्यादिषुप्रतिपादित्वात् ॥ यत्तु—माष कल्माष मांसाद्यैर्देयो दिक्षुबलिर्निशि ॥ कूष्माण्ड मिक्षु दण्डश्च *मद्यमासव एव च ॥ एते बलि समाख्येयास्तृप्तौ छाग समा स्मृताः ॥ तथा माषान्नेन बलिर्देयो ब्राह्मणेन विजानता इति ॥

कालिका पुराणे ॥

रम्भेक्षु नारिकेलञ्च गुवाकं कण्टकी फलम् ॥ उर्वारुकं करञ्जञ्च छेदयेच्छुरिकादिनेति ॥ तथा—ओदनं मांस माष वदित्यन्नदाकल्प भगवन्त भास्कर धृत वचोभ्यां चाऽशक्त क्षत्रियादेर्ब्राह्मणस्य च बलिदातृत्व मायातं तत्रायं विचारः ॥ ब्राह्मणश्चेद्राजसीं पूजां कर्तुमिच्छेत्तदा पाश्र्वतर कूष्माण्डादि छेदयेदेवं सात्विकोऽशक्तश्च क्षत्रियादि रपि ॥ सात्त्विक ब्राह्मणस्यतु बलिदानं न युक्तं ॥ सात्विकीजप यज्ञाद्यैर्नैवेद्यैश्च निरामिषैरिति प्रागुक्ते : ॥ ब्राह्मणेन सदा देयं कूष्मांडं बलि कर्मणि ॥ श्री फलं वा सुराधीश ! छेदं नैवतु कारयेदिति ॥ निर्णयसिन्धूक्तं तच्छेदन निषेधाद्ज्ञापकाच ॥ अतएव सुरया स्वगात्र रुधिरेण च पूजा ब्राह्मणस्य न भवति ॥ स्वगात्र रुधिरं दत्वा ब्रह्महत्यामवाप्नुयादिति ॥ तथा मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्या देव हीयते ॥

इति कालिका पुराणात् ॥

दुर्गारहस्य श्यामा रहस्य, निरुत्तरतन्त्र, आदि अनेक तन्त्र के मत से भी ब्राह्मण को मद्य मांसादि पूजन निषेध है ॥

---

* सुराभावे च गोक्षीरं द्विजो दद्याद्युगे युगे ।
द्रव्याभावे चानुकल्पैः पूजयेत्परदेवताम् ॥
निरुत्तर तन्त्रे ५ पटले ॥

घृत की बत्ती बनाकर कपूर सहित आरती में रखकर गंध पुष्प से पूजन कर नीचे लिखे मन्त्रों से आरती खड़े होकर करना यथाशक्ति *बाजे बजते रहें ॥

आरती ॥

ॐ आरात्रि पार्थिव ꣳ रजः पितुर प्रायि धामभिः ॥ दिवः सदा ꣳसि बृहती वितिष्ठऽआत्वेषं वर्तते तमः ॥ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैवच ॥ त्वमेव सर्व ज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ॥

श्री देवी नीराजनम् ॥

ॐ जय जय जगदम्बे !, मा जय जय जगदम्बे ! ॥ नीराजनमवलोचय २ मोचय भयमम्बे ! ॥ १ ॥ जय देवि २ ॥ कैलासोपरि सुन्दर मणिमय मंदिरगां ॥ मा मणिमय० ॥ त्वां ध्यायन्तिमहान्तः मा त्वां० परिशंकर सहिताम् ॥ दिव्यकुसुम शुभगंधै, मण्डित सुभगांगीं मा मंडित सु० ॥ दिव्याम्बर वर-भूषण भूषित, सर्वाङ्गीम् ॥ जय देवि० ॥२॥ विधि हरि हर शक्रादिक, सेवितमृदुचरणे मा सेवित० ॥ विविध वधू परमादर २ परि रचिताभरणे ॥ धनदादिक सुरवन्दित, निरजर वर शरणे ॥ मा निर० ॥ तेषां मुकुटमणीचय, नीराजित चरणे ॥ जय देवि २॥३॥ अप्सरसांसुरनिकरैः, कृत-पूजन समये मा कृत० ॥ ताण्डववेणु विवादन, कोमल-गानमये, को० ॥ धिङ् धिङ्तां धिङ् धिट्तां मूर्च्छध्वनिसहिते मामूर्च्छध्वनि० ॥ झणणण झननन, नूपुर रवमुदते ॥ जय देवि २ ॥४॥ विविधचतुश्चक्रागत, शक्त्यर्चनसुखदे मा शक्त्य० ॥ संशयपापविनाशिनि निन्दक-जनदुःखदे नि० ॥ प्रौढ़ोल्ल्हास विलासिनि, सेवकमनसुखदे ॥ मा सेवक० ॥ तस्मिन्मुदितसमाजे, मधुमुदिताहससे ॥ मधु० ॥ जय० ॥५॥ सावर्णवटुकादिक, गणपति बलि सहितं ॥ मा

---

* शिवागारे झल्लकं च सूर्यागारे च शंखकम् ॥
दुर्गा गारे वंशिवाद्यं मधुरीं च न वादयेत् ॥
झल्लकं कांस्य निर्मित करतालं ॥ योगिनी तन्त्रे ॥

गणप० ॥ स्वीकारं कुरुपूजनमव मां, जह्यहितम् २ ॥ नवनिधिरचितविधानं, शृणुत्वं जगदम्बे ॥ मा शृणु० ॥ कुरुभातशचरणानांशरणागतमम्बे ! ॥ माश० ॥ जयदेवि ! जयदेवि ! ॥६॥

भाषा की आर्तिः ॥

जय अम्बेगौरी मैया जय श्यामागोरी ॥ मैया जय मंगलकरणी मैया जय आनन्द करणी ॥ तुमको निशिदिन ध्यावत हरि ब्रह्मा शिवरी ॥ जय० ॥१॥ मांग सिन्दूर विराजत टीको मृगमद को ॥ मैया टीको० ॥ उज्ज्वल से दोऊ नैना, चन्द्र वदन नीको ॥ जय अम्बे० ॥२॥ कनक समान कलेवर, रक्ताम्बर राजै ॥ मैया रक्ता० ॥ रक्त पुष्प गल माला, कण्ठन पर साजै ॥ जयअम्बे०॥३॥ केहरि वाहन राजत, खड्ग खप्पर धारी ॥ मैया० खड्गख० ॥ सुर नर मुनि जन सेवत, तिनके दुःखहारी ॥ जय अम्बे० ॥४॥ कानन कुण्डल शोभित, नासाग्रे मोती ॥ मैया नासा० ॥ कोटिक चन्द्र दिवाकर, राजत सम ज्योती ॥ जय अ० ॥ ५ ॥ शुम्भ निशुम्भ विदारे, महिषासुर घाती ॥ मैया महिषा० ॥ धूम्र विलोचन नैना, निशिदिन मदमाती ॥ जय अम्बे० ॥ ६ ॥ चण्ड मुण्ड संहारे शोणित बीज हरे ॥ माई शोणित० ॥ मधु कैटभ दोऊ मारे सुर भयहीन करे ॥ जय अं० ॥७॥ ब्रह्माणी रुद्राणी तुम कमला रानी ॥ माई तुम क० ॥ आगम निगम बखानी तुम शिव पटरानी ॥ जय अं० ॥ ८ ॥ चौंसठ योगिनि गावत, नृत्य करत भैरों ॥ मैया नृ०॥ बाजत ताल मृदंगा, और बाजे डमरू ॥ जय अं० ॥ ९ ॥ तुम ही जग की माता तुम ही हो भरता माई तुम० ॥ भक्तन की दुःख हरता ॥ सुख संपति करता ॥ जय अं० ॥१०॥ भुजा चार अति शोभित, वर अभय धारी ॥ मैया वर० ॥ मन वांछित फल पावत, सेवत नरनारी ॥ जय० ॥११॥ कंचन थाल विरा-

जत अगर कपुर बाती ।। माई अग० ।। श्रीमालकेतु में राजत कोटिरतन ज्योती ।। जय अंबे० ।। १२ ।। अम्बेजी की आरति, जो कोई नर गावै ।। मैयाजो० ।। कहत शिवानन्द स्वामी, सुख सम्पति पावै ।। जय अम्ब गौरी ।। १३ ।।

देव्या आरार्तिक स्तोत्रं नीराजन समये पठनीयम् ।।

ॐ जयदेवि ! जयदेवि ! हे शङ्कर ललने !

ॐ मा हे शङ्कर ललने ! ।। कुरु कुरु चेतः सदयंमयिमातर्मलिने ।। १ ।। मध्ये स्थापित दीपै रालीशत यूथैऽर्मा आलीशतयूथैः ।। निज करतल ध्वनिभिर्नादित दिग्पटलैः ।। क्रीडन गायन हासर्नन्दिनि मृदु हृदयां भावयचेतः सततं भुवनेशीं सदयां ।। जयदेवि० २ ।। भवभयसागरपारंकर्तुं इषदुदिता, विदितादन्यत्प्रापयितुं मुदिता ।। सर्वाप्येवंलीलाजनता जनतायै नकथं त्ववसे ।। हृदय जगतो ममतायै ।। जयदेवि० २ ।। ३ ।। नाना मणिमयभूषामण्डित दोर्युगलेनूपुर मधुर ध्वनि भिर्नादित दिग्पटले ।। उद्यद्दिनकर भानु प्रतिभट रुचिरास्येध्यातुः ।। किं किं दुर्लभ महमिह नहि जाने ।। जयदेवि० २ ।। ४ ।। जगतः सृष्टि स्थितयो हरयः प्रतिकल्प, लोचन मीलन लीलोन्मेषणतः कुरुषे ।। को वा प्रभवित तस्याः स्मृतये मनसा, येमहिमा वेदा यत्र स्मृतिभिः सहचकिता ।। जयदेवि० २ ।। ५ ।। पाशाभय वरहस्ता रजनी पतिमाला ।। रक्ताम्बरपरिधाना सृणि भूषित हस्ता ।। रवि शशि लोचन युग्मा हुतवह नयनैनां ।। मानस भावय जननीं सततं भुवनैनाम् ।। जयदेवि० २ ।। ६ ।। सर्वं खल्विदमखिलं तदहं भुवनाधीशानी ।। नान्यर्त्किचिन्मधुसूदन सततम् ।। इति या सम्यक् शिशवे हरये वट पत्रे ।। प्रवदति भुवना तस्यै नम एतत्कुर्मः ।। जयदेवि० २ ।। ७ ।। पद्यैरेतैरमलैर्मनुजो भुवनेश्याः कर्पूरात्यां यजते परयाक्लिभक्त्या ।। तस्य-

क्षोणीपतयो वशगा धन धान्यं पुत्राः पौत्रागेहे विमलं पदमन्ते ॥ जयदेवि जयदेवि ॥ ८ ॥

श्रीमच्छङ्कराचार्य विरचितं देव्या आरार्तिक स्तोत्रम् ॥

आरती रखकर शंख में जल भरकर उतारे और थोड़ा थोड़ा दोनों ओर जल शंख से छोड़ता रहे ॥ बाद में थोड़ा जल हाथ में लेकर उपस्थित भक्तों के ऊपर छिड़क कर नीचे लिखे मंत्र हाथों में पुष्प लेकर बोले ॥ आरती की पूर्ण विधि तान्त्रिक पूजन में देखना ॥

मंत्र पुष्पाञ्जलिः ॥

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ तेहनाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्तिदेवाः ॥ ॐ राजाधिराजायप्रसह्य साहिने नमोवयं वैश्रवणाय कुर्महे ॥ समे कामान्कामकामायमह्यं ॥ कामेश्वरो वैश्रवणो ददातु कुवेराय-वैश्रवणाय राजाधिराजाय महाराजायनमः ॥ ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्य माधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुष आन्तादापरार्धात् ॥ पृथिव्यै समुद्रपर्यान्ताया एकराडिति ॥ तदप्येष श्लोकोभिगीतो-मरुतः परिवेष्टारो मरुत्तस्या वसन्गृहे ॥ आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ ॐ विश्वतश्चक्षुरुत विश्वतो मुखो बाहुरुत विश्व तस्पात् ॥ सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देवएकः ॥ मन्त्र पुष्पाञ्जलिं समर्पयामि नमः ॥ सेवन्तिका वकुल चम्पक पाटलाब्जैः ॥ पुन्नाग जाति करवीर रसाल पुष्पैः ॥ बिल्व प्रवाल तुलसीदल मंजरीभिः ॥ त्वां पूजयामि जगदीश्वरि ! मे प्रसीद ॥ पापोहं पाप कर्म्मा हं पापात्मा पाप संभवः ॥ त्राहि मां सर्वदा मातः सर्व पाप हरा भव ॥

दुर्गा गायत्री ॥

ॐ महादेव्यै विद्महे दुर्गायै धीमहि तन्नो देवी प्रचोदयात् ॥ एवं पुनः पुनः प्रणम्य स्तुवीत ॥



*प्रदक्षिणा ॥

ॐ यः शुचिः प्रयतो भूत्वा जुहुयादाज्य मन्वहम् ॥ सूक्तं पञ्चदशर्चञ्च श्री कामः सततं जपेत् ॥ ॐ येतीर्थानि प्रचरन्ति सृका हस्ता निषङ्गिणः ॥ तेषाꣳसहस्र योजने वधन्वानि तन्मसि ॥ नमस्ते देव देवेशि ! नमस्ते ईप्सित प्रदे ! ॥ नमस्ते जगतां धात्रि ! नमस्ते शंकर प्रिये ! ॥ नमः सर्व हितार्थायै जगदाधार हेतवे ॥ साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः ॥

इति प्रदक्षिणा ॥

‡साष्टाङ्ग प्रणाम करना ॥

पुनः शान्ति स्तवम् पठेत् ॥

ॐ दुर्गां शिवां शान्ति करीं ब्रह्माणीं ब्रह्मणः प्रियाम् ॥ सर्व लोक प्रणेत्रीं च प्रणमामि सदाम्बिकाम् ॥ १ ॥ मंगलां शोभनां शुद्धां निष्कलां परमां कलाम् ॥ विश्वेश्वरीं विश्वधात्रीं चण्डिकां प्रणमाम्यहम् ॥ २ ॥ सर्व देवमयीं देवीं सर्व लोक भयापहाम् ॥ ब्रह्मेश विष्णु नमिताम् प्रणमामि सदा उमाम् ॥३॥ विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थान निवासिनीम् ॥ योगिनीं योगजननीं चण्डिकां प्रणमाम्यहम् ॥ ४ ॥ ईशानमातरं देवी-मीश्वरीमीश्वर प्रियाम् ॥ प्रणतोस्मि सदा दुर्गां संसारार्णव तारिणीम् ॥ ५ ॥ यइदं पठति स्तोत्रं शृणुयाद्वापि यो नरः ॥ सम्मुक्तः सर्व पापेभ्यो मोदते दुर्गया सह ॥ ६ ॥

इतिमत्स्यसूक्तोक्त दुर्गास्तोत्रम् ॥

---

* एका चण्डयां रवौसप्त तिस्रो दद्याद्विनायके ॥
चतस्रः केशवे देया शिवस्यार्द्ध प्रदक्षिणा ॥

‡ उरसा शिरसा दृष्टया मनसा वचसा तथा ॥
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोष्टाङ्ग ईरितः ॥
बाहुभ्यां च सजानुभ्यां शिरसा मनसाधिया ॥
पञ्चाङ्ग कः प्रणामः स्यात् सर्वत्र प्रवराविमौ ॥
इति तन्त्रान्तरे ॥



वर प्रार्थना ॥

रूपं देहि यशोदेहि भगं भगवति ! देहि मे ॥ पुत्रान्देहि धनन्देहि सर्वान्कामांश्च देहि मे ॥१॥ ॐ महिषघ्नि ! महामाये ! चामुण्डे ! मुण्डमालिनि ! ॥ आयुरारोग्य विजयंदेहि देवि ! नमोस्तु ते॥२॥ भूत प्रेत पिशाचेभ्यो रक्षोभ्यः परमेश्वरि ! ॥भयेभ्यः मानुषेभ्यश्च देवेभ्यो रक्ष मां सदा ॥ ३ ॥ सर्व मंगल मंगल्ये शिवे ! सर्वार्थ साधिके !॥ उमे ! ब्रह्माणि ! कौमारि ! विश्वरूपे ! प्रसीद मे॥४॥ कुंकुमेन समा लब्धे चन्दनेन विलेपिते ॥ बिल्व पत्र कृता पीड़े दुर्गे ! त्वां शरणं गतः ॥ ५ ॥ गतं पापं गतं दुःखं गतं दारिद्र्यमेवच ॥ आगता सुख सम्पत्तिः पुण्याच्चतव दर्शनात् ॥ ६ ॥ ॐ हर पापं हर क्लेशं हर शोकं हरासुखम् ॥ हर रोगं हर क्षोभं हर मारीं हरप्रिये ! ॥ ७ ॥ ॐ कायेन मनसा वाचा कर्मणायत्कृतं मया ॥ ज्ञानाज्ञान कृतं पापं दुर्गे ! त्वं हर दुर्गतिम् ॥ ८ ॥ पूजा ‡फलाभि कार्याद्यैः सुकृतं यन्मयार्चितम् ॥ तत्सर्वं फलदं मेस्तु भुक्ति मुक्तिंच देहि मे ॥ ९॥ लक्ष्मि ! त्वत्प्रज्ञया-नित्यं कृतापूजा तवाज्ञया ॥ स्थिरा भव गृहेह्यस्मिन्मम सन्तान ( ऐश्वर्य ) कारिणि ॥ १० ॥

विपद्गण ध्वान्त सहस्र भानवः ॥ समीहितार्थान्प्रति काम-धेनवः ॥ अपार संसार समुद्र सेतवो मां पातु चंडी चरणाब्ज-रेणवः ॥ इत्युच्चार्य मूल मन्त्रेण पुष्पांजलित्रयं दद्यात् ॥

अथ देव्यपराध क्षमापन स्तोत्रम् ॥

श्री गणेशायनमः ॥ न मंत्रं नो यंत्रं तदपि च न जाने स्तुति महो न चाह्वानं ध्यानं तदपि च न जाने स्तुति कथाः ॥ न जाने मुद्रास्ते तदपि च न जाने विलपनं परं जाने मातस्त्वद-

‡ पूजाफल सुकार्याद्यैः ॥

नुसरणं क्लेश हरणम् ॥ १ ॥ विधेरज्ञानेन द्रविण विरहेणालस-
तया विधेयाशक्यत्वात्तवचरणयोर्याच्युतिरभूत् ॥ तदेतत्क्षन्तव्यं
जननि ! सकलोद्धारिणि ! शिवे ! कुपुत्रो जायेत क्वचिदपि
कुमाता न भवति ॥ २ ॥ पृथिव्यां पुत्रास्ते जननि ! बहवः
सन्ति सरलाः परं तेषां मध्ये विरल तरलोऽहं तव सुतः ॥ मदी-
योयंत्यागः समुचितमिदं नो तव शिवे ! कुपुत्रोजायेत क्वचिदपि
कुमाता न भवति ॥ ३ ॥ जगन्मातर्मातस्तव चरण सेवा न
रचिता न वा दत्तं देवि ! द्रविणमपि भूयस्तव मया ॥ तथापि
त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे कुपुत्रो जायेत क्वचिदपि कु-
माता न भवति ॥ ४ ॥ परित्यक्त्वा देवान्विविध विधसेवाकुल
तया मया पंचाशीतेरधिकमुपनीते तु वयसि ॥ इदानीं चेन्मात-
स्तव यदि कृपानापि भविता निरालम्बो लम्बोदर जननि ! कं
यामि शरणम् ॥ ५ ॥ श्वपाको जल्पाको भवति मधुपाकोपम
गिरा निरातंको रंको विहरति चिरं कोटि कनकैः ॥ तवापर्णे
कर्णे विशति मनु वर्णे फलमिदं जनःकोजानीते जननि ! जप-
नीयं जपविधौ ॥ ६ ॥ चिताभस्मा लेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजग पतिहारी पशुपतिः ॥ कपाली भूतेशो
भजति जगदीशैकपदवीं भवानि ! त्वत्पाणि ग्रहण परिपाटी
फलमिदम् ॥ ७ ॥ न मोक्षस्या कांक्षा न च विभव वांछापि च
न मे नविज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः ॥ अतस्त्वां-
संयाचे जननि ! जननं यातु मम वै मृडानी रुद्राणी शिव !
शिव ! भवानीति जपतः ॥ ८ ॥ नाराधितासि विधिना विविधो-
पचारः किं रुक्ष चिन्तन परैर्नकृतं वचोभिः ॥ श्यामे त्वमेव यदि
किंचन मय्यनाथे धत्से कृपामुचितमम्ब ! परं तवैव ॥९॥ आपत्सु
मग्नः स्मरणं त्वदीयं करोमि दुर्गे ! करुणार्णवेशि ॥ नैतच्छठत्वं

मम भावयेथाः क्षुधातृषार्ता जननीं स्मरन्ति ॥ १० ॥ जगदम्ब विचित्र मत्र किं परिपूर्णा करुणास्ति चेन्मयि ॥ अपराध परं पराबृतं नहि माता समुपेक्षते सुतम् ॥ ११ ॥ मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ॥ एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु ॥१२॥ इति श्री मत्परमहंस परिव्राजकाचार्य श्रीमच्छंकराचार्य विरचितं देव्यपराधक्षमापन स्तोत्रं सम्पूर्णम् ॥

हे मैया तेरा मन्त्र ( जपने का ) यन्त्र ( पूजा करने का ) स्तुति (प्रार्थना करना ) आवाहन ( बुलाना ) ध्यान ( मूर्ति के स्वरूप को हृदय में धारण करना ) स्तुति कथा ( भक्तों का उद्धार करने वाला चरित्र ) मुद्रा ( हाथ की आकृतियों से बनती हैं ) और विलाप यह सब कुछ नहीं जानता हूँ; किन्तु यह जानता हूँ कि तू सब प्रकार के क्लेशों को दूर करती है इसलिये तेरी शरण में रहना सुन्दर है ॥१॥ सब की सहायता करने वाली हे शिवे ! ( कल्याण करने वाली ) हे जननि ! तेरे पूजन की रीति न जानने से द्रव्य की कमी में, आलस्य से, तथा पूर्व में कहीं विधि को न जानने से तेरे चरणों की सेवा करने में जो भूल हुई हो सो क्षमा करना, कारण पुत्र तो कुपुत्र होता है परन्तु मा कुमाता नहीं हुआ करती है ॥२॥ हे माता ! पृथ्वी पर तेरे सीधे पुत्र बहुत से हैं लेकिन उन सब में मैं ही एक चंचल हूँ इस कारण हे शिवे ! ( कल्याण करने वाली ) मुझे छोड़ न देना इसलिये कि पुत्र तो कुपुत्र होता है परन्तु मा कुमाता नहीं हुआ करती है ॥३॥ हे संसार की माता ! हे मैया ! मैंने तेरे चरण कमलों की सेवा नहीं करी और तेरी सेवा में विशेष धन भी नहीं लगाया। परन्तु फिर भी मुझ पर तू इस प्रकार अनुपम स्नेह करती है सो ठीक ही है क्यों कि पुत्र तो कुपूत होता है परन्तु माता कुमाता नहीं हुआ करती है ॥४॥ हे लम्बोदर ( गणेश ) की मा ! अपनी ८५ वरष से भी विशेष अवस्था बीतने पर भी मैंने अनेक विधि के साथ पूजन करने को छोड़कर समस्त देवताओं को त्याग दिया आगे तेरी कृपा जो अब भी न हो तब मैं बिना किसी सहारे किधर किस की शरण में रहूँ ॥५॥ हे माता अपर्णे ! ( दुर्गे ) ! जो तेरे मन्त्र के अक्षर ( दूसरे व्यक्ति द्वारा जपने से ) कान में पहुँचते ही "श्वपाक" चांडाल भी सुन्दर एवं मधुर वाणी द्वारा अद्वितीय वाचाल होता है तथा रंक जो

नवार्णकम् ॥ चण्डीसप्तशतीं मध्येसंपुटोयमुदाहृतः ॥ इति डामरतंत्रविरोधाच्च ततः सप्तशती पाठः पुनर्नवार्ण मंत्र जपः ततो देवी सूक्तपाठस्ततो रहस्यत्रयपाठ इति क्रमेणपाठः कर्तव्यः ॥

सप्तशती पाठारम्भे शापोद्धारादिकं कर्तव्यं तत्प्रकार उक्तः केरलैस्तथा च ॥ अन्त्या १३ द्या १, के १२, द्वि २, रुद्र ११ त्रि ३, दिग १० ब्ध्यं ४, के ९ ष्वि ५, म ८ र्तवः ६, मश्वो ७ स्त्र ७ इति सर्गाणां शापोद्धारे मनोः क्रम इत्युक्ते त्रयोदश प्रथमौ, द्वादश द्वितीयौ, एकादश तृतीयौ, दशमचतुर्थौ, नवम पञ्चमौ, अष्टम षष्ठावध्यायौ पठित्वा सप्तममध्यायं द्विः पठेदिति शापोद्धार प्रकारः ॥ अङ्गहीनो यथा देही सर्व कर्मसु न क्षमः ॥ अङ्गषट्क विहीनातु तथा सप्तशतीस्तुतिः ॥ तस्मादेतत्पठित्वैव जपेत्सप्तशतीं पराम् ॥ अन्यथा शापमाप्नोति हानिश्चैव पदे-पदे ॥ इतिकात्यायनीतन्त्रोक्तेः ॥ कवचादि षडङ्ग रहित केवल सप्तशती पाठ करणमेव शापः ॥ कवचादि साहित्येन तत्करणं मोक्षदमित्याहुः ॥ रहस्य तन्त्रस्थ गुरु कीलकपटले तु सप्त-शत्याख्यमन्त्रस्य यावज्जीव महं जपं कुर्वंस्ततो न प्रमादं प्राप्नुयामिति निश्चयम् ॥ कृत्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यतीत्युक्तेर्यावज्जीवमहं सप्तशती पाठं प्रमादेन सदसदपि न त्यक्ष्ये ॥ इति दृढ संकल्पेन तदारम्भ उद्धारस्तदभावेन तदा-रम्भः शाप इति स्थितम् ॥

उत्कीलनम् ।

उत्कीलने चरित्राणां मध्याद्यन्तमिति क्रमः इति दुर्गाप्रदी-पस्थ केरलोक्तेः ॥ आदौ मध्यम चरित्रं पठित्वा ततः प्रथम चरित्रं ततस्तृतीयचरित्रं पठेदितिगुरुकीलकपटलेतु ॥

शिव उवाच ।

पुरा सनत्कुमाराय दत्तमेतन्मयानघ १ ॥ संवर्ताय ददौ

तच्च सचान्यस्मै ददौ च तत् ॥ सर्वत्र चण्डीपाठस्य प्राचुर्येण महीतले ब्रह्मकाण्डः कर्मकाण्डस्तंत्रकाण्डच सर्वथा ॥ अभूत्प्रतिहतोनेन शीघ्रसिद्धि प्रदायिनी ॥ तदा तेषां च सार्थक्यं कर्तुकामेन भूतले ॥ दानप्रतिग्रहत्वेन मंत्रोयं कीलितोमया ॥ दानप्रति ग्रहाख्यं यत्कीलकं समुदाहृतम् ॥ तदारभ्य च मंत्रोयंकीलकेनाभिकीलितः ॥ नसर्वेषांभवेत्सिद्ध्यै ये कीलकपराङ्मुखाः ॥ ये नराः कीलनेनेदं जपन्ति परया मुदा ॥ तेषांदेवी प्रसन्नास्यात्ततः सर्वाः समृद्धयः ॥ त्वत्प्रसूतस्त्वदाज्ञप्तस्त्वद्दासस्त्वत्परायणः ॥ त्वन्नामचिन्तनपरस्त्वदर्थेऽहं नियोजितः ॥ ममार्जितमिदं सर्वं तच्च त्वं परमेश्वरि ! ॥ राष्ट्रं बलं कोषगृहं सैन्यमन्यच्च साधनम् ॥ त्वदधीनं करिष्यामि यत्रार्थे त्वं नियोक्ष्यसि ॥ तत्रदेवि ! सदा वर्ते त्वदाज्ञामेव पालयन् ॥ इति संचिन्त्य मनसा स्वार्जितानि धनानिच ॥ कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥ समर्पयेन्महादेव्यै स्वार्जितं सकलं धनम् ॥ राष्ट्रं गृहं कोषबलं नवं च यदुपार्जितम् ॥ अस्मिन्मासि मयादेवि ! तुभ्यमेतत्समर्पितम् ॥ इति ध्यात्वा ततो देव्याः प्रसादात्प्रतिगृह्य च ॥ विभज्य पञ्चधा सर्वं त्र्यंशान् स्वार्थं प्रकल्पयेत् ॥ देवपित्रतिथीनां च क्रियार्थं त्वेकमादिशेत् ॥ एकांशं गुरुवेदद्याच्चेन देवी प्रसीदति ॥ तस्य राज्यं स्वकं सैन्यं कोषः साधु विवर्द्धत ॥ इति दानप्रतिग्रह नामक महोत्कीलनं विहितम् ॥ केचित्तु कीलने एव शापोद्धारामित्याहुः ॥

डामर तन्त्रोक्त नवार्ण मन्त्रार्थः ॥

एतन्मन्त्रमहिमातिशयोर्थश्च ॥ डामर तन्त्रोक्तो निरूप्यते ॥ निर्धूतनिखिलध्वान्ते नित्यमुक्तेपरात्परे ॥ अखण्डब्रह्मविद्यायै

चित्सदानन्दरूपिणीं ॥ अनुसंदध्महे नित्यं वयं त्वां हृदयाम्बुजे ॥ इत्थं विशदयत्येषा याकल्याणी नवाक्षरी ॥ अस्या महिमलेशोपि गदितुं केन शक्यते ॥ बहूनां जन्मनामन्ते प्राप्यते भाग्यगौरवात् ॥ इत्यादि ॥ अत्र प्रथम श्लोके सम्बुद्धयन्तत्रयन्तश्चतुर्थ्यंतं ततः पुनः संबुद्ध्यन्तत्रयमिति सप्तभिः पदैः क्रमेण मंत्रे सप्तधा पदच्छेदः ॥ पदानांतत्तद्विभक्त्यन्ततातत्तदार्थाश्चोति कथितम् ॥ तदुत्तर मर्द्धेनाकांचित पदानामभ्याहार उक्तः ॥ इतरत्स्पष्टम् ॥ सच्चिदानन्दात्मक ब्रह्मरूपित्वादेवशक्तेरपि त्रिरूपत्वं तत्रचिद्रूपा महासरस्वती वाग्भवबीजेनसंबोध्यते ॥ ज्ञानेनैवाज्ञाननाशान्निर्धूत निखिलभ्रान्त पदेन तद्विवरणं युक्तमेव नित्यत्वं त्रिकालाबाध्यत्वम् ॥ अतएव शुक्तत्वं कल्पित वियदादि प्रपञ्चनिरासाधिष्ठानत्वम् ॥ एतेन सद्रूपात्मकमहालक्ष्मीरूपस्य भुवनेश्वरी मंत्रेण संबोधनमिति व्याख्यानम् पर उत्कृष्टः ॥ सर्वानुभव संवेद्य आनन्द एव तस्यैव पुरुषार्थत्वात् ॥ आत्मनः कामाय सर्वं प्रियं भवतीति श्रुत्या तदितरेषामपि तदर्थत्वेनानन्दस्यैव सर्वशेषतया परत्वात् ॥ स च मानुषानन्दमारभ्योत्तरोत्तरं शतगुणाधिक्येन श्रुतौ बहुविधोवर्णितः ॥ तेषु परमातिशायी स एको ब्रह्मण आनन्द इति परमावधित्वेनाम्नात एव परात्परः तेनानन्द प्रधान महा काली स्वरूपस्य काम बीजेन सम्बोधनंयुक्तम् ॥ चामुण्डाशब्दो हि मोक्षकारिणीभूत निर्विकल्पवृत्ति विशेषपरः ॥ तादर्थ्येचतुर्थी चमूं सेनां वियदादिसमूहरूपां डाति लडयोरक्यान्लाति आदत्ते आत्मसात्करणेनापूरयतीति व्युत्पत्तेः॥ चणादशादित्वात्सर्वं सुस्थमित्याहुर्बहवः परन्तु अखण्ड ब्रह्मविद्येत्यत्र चामुण्डा पदस्यार्थमाहुः ॥ विच्चेइतितुवित् च इ इति पद त्रयात्मकं बीजत्रये-

णोक्तानां चित्सदानन्दादीनां वाचकं संबुद्धयन्तंबीजत्रयस्य क्रमेण विशेषणम् ॥ अस्य स्त्री ईतस्य ह्रस्वे कृते सति हे आनन्द ब्रह्म महिषि इत्यर्थः ॥ चित्पदं ज्ञान परम्प्रसिद्धमेव चकारोपि नपुंसकः—सन्नुसत्पर इति योज्यम् ॥ अनुसन्दामहे इतिशेषः ॥ तथाच महासरस्वत्यादिरूपे चिदादिरूपे चंडिके त्वां ब्रह्म विद्या प्राप्त्यर्थं वयं सर्वदा ध्यायामः ॥ इति मंत्रार्थः फलितः तस्यायं संग्रहः महासरस्वति चिते महालक्ष्मि सदात्मिके महाकाल्या-नन्दरूपं त्वं तत्वज्ञान सिद्धये अनुसंदध्महे देवि ! वयं त्वां हृदयाम्बुजे इति अयंचार्थः प्राचीनैर्वर्णित एवात्र सम्यक् परिष्कृ-त्योक्तः ॥ इति नवार्णमंत्रस्यार्थः ॥

मेरु तन्त्रोक्त अथास्य विधानमुच्यते ॥

अथातः सं प्रवक्ष्यामि चामुण्डायाः महामनुम् ॥ नव वर्णात्मकं यस्य सेवनाद्भुक्तिमुक्तयः ॥१॥ सुरथो यत्प्रसादेन राज्यं प्राप्याभवन्मनुः ॥ संसार बन्धनिर्नाशि ज्ञानमाप्तं समा-धिना ॥२॥ मार्कण्डेयपुराणोक्त चरित्रत्रितयं तव ॥ जपाद्यस्य-फलं दद्यात्तं मनुं वच्मिसांप्रतम् ॥३॥ वाक्लज्जाकामबीजान्ते चामुण्डायै पदं वदेत् ॥ विच्चे नवार्णो मंत्रोयं शक्तिमन्त्रोत्त-मोत्तमः ॥४॥ अस्मिन्नवाक्षरे मन्त्रे महालक्ष्मीर्व्यवस्थिता ॥ तस्मात्सुसिद्धः सर्वेषां सर्वदिक्षु प्रदीपकः इति एतावतात्र सिद्धादि विचाराभावोज्ञापितः ॥

अथ पल्लवादि नियमः ॥

मन्त्राणां पल्लवो वासो मन्त्राणां प्रणवः शिरः ॥ शिरः पल्लवः संयुक्तो मन्त्रः काम दुघो भवेदित्युक्तेरस्य पल्लवादि विधिरुच्यते ॥ तत्र प्रणवः प्रसिद्धः ॥ पल्लवश्च ॥ नमोन्तः शान्तिके पुष्टौ प्रणिपातेच कीर्तितः वश्याकर्षणमोहेषु स्वाहान्तः

सिद्धिदायकः ॥ वौषट् पल्लव संयुक्तो मन्त्रः पुष्ट्यादिसाधकः ॥ हुंकारपल्लवोपेतोमारणे ब्राह्मणं विना ॥ यन्त्र भञ्जन कार्येषु सुघोरभयनाशने ॥ वषडन्तः प्रकल्प्यस्तु ग्रहवाधा विनाशकः ॥ उच्चाटने तु संप्रोक्तो मन्त्रः फट्पल्लवान्वितः ॥ ऐतेपल्लवास्त-त्कर्मणि चण्डीपाठेपि श्लोकान्तादौ स्तोत्रान्तादौ वा योज्याः॥ नन्वत्र केवल मंत्रेणैवेष्टसिद्धिरस्तु किमृष्यादिपल्लवान्त संयोग विशेषजृम्भितविस्तरेणेतिचेन्मैवम् ॥ देवर्षि छन्दोहीनो यः सतु सुप्तो भुजङ्गमः ॥ अशक्तः शक्तिरहितो निष्फलो बीजवर्जितः ॥ अतत्वस्तत्व वियुतो विनियोगोऽप्रभुर्मनुः ॥ न्यासहीनो भवेन्मूको-मृतःस्याच्छिरसा विना ॥ अपल्लवस्तु नग्नः स्यात्सुप्तः स्यादा-सनं विना ॥ गुरुम्बिना वृथा मन्त्रः अव्यजापेतु शून्यकः ॥ निर्वीर्यो दुष्टदत्तः स्यात्सान्यवीजस्तु कीर्तितः ॥ ( दुष्टाय दत्तो दुष्टदत्त इत्यर्थः ) इति वचनैरस्य देवर्ष्यादि पल्लवान्ताद्यङ्ग वैधुर्योद्घाटितानिष्टफलानुवन्धि भुजङ्गमादि दोषदूषितत्वाववो-धाद् ॥ परेतु ॥ आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ॥ वेदितव्यः प्रयत्नेन ब्राह्मणेन विपश्चितेति ॥ याज्ञवल्क्योक्तेर्वै-दिकेमंत्रे यथा ऋष्यादिविनियोगान्त चतुष्केतरपल्लवादि विचा-रोनास्ति तथास्मिन्नवार्णेऽपीत्याहुः ॥ इति पल्लवादि विचारः ॥

गन्धर्व तन्त्रे ॥

स्वस्थान माश्रिता देवाः सर्वाभीष्ट फलप्रदाः ॥
स्वस्थान वर्जिता देवाः शोकदुःख फल (भय) प्रदाः ॥





दुर्गार्चनसृतौ तन्त्रोक्तयन्त्र पूजनादि विधिः सम्पूर्णः॥



ॐ नमश्चण्डिकायै ॥ तपस्यन्तं महात्मानं मार्कण्डेयं महामुनिम् ॥ व्यास शिष्यो महातेजा जैमिनिः परिपृच्छत ॥ जैमिनिरुवाच ॥ महर्षे ! कथयोत्पत्तिं चण्डिकायाः सुविस्तरम् ॥ ययासर्व मिदं व्याप्तं त्रैलोक्यं स चराचरम् ॥

———

# अथ दुर्गा पाठारम्भः ॥

आदावाचामेत् ॥ ॐ ऐं आत्मतत्वं शोधयामि नमः स्वाहा ॥ ॐ ह्रीं विद्यातत्वं शोधयामि नमः स्वाहा ॥ ॐ क्लीं शिवतत्वं शोधयामि नमः स्वाहा ॥ ॐ ऐं ह्रीं क्लीं सर्वतत्वं शोधयामि नमः स्वाहा ॥ ततः मूल मंत्रेण प्राणायामं कुर्यात् ॥ ततः श्रीगणेश गुर्वादीन्नत्वा [1]संकल्पं कुर्यात् ॥ देशकाल संकीर्त-

---

[1] ॐ तत्सदद्य ब्रह्मणो द्वितीय प्रहरार्द्धे श्री श्वेतवाराहकल्पे जम्बूद्वीपे भरतखण्डे आर्यावर्तैक देशान्तरगते कलियुगे कलिप्रथमचरणे पुण्यक्षेत्रेऽमुक सम्वत्सरे अमुक ऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुक करणे अमुकामुकराशिस्थ रव्यादिग्रहस्थित वेलायाममुक गोत्रोत्पन्नामुकशर्म्मा ( यजमानस्य ) जन्मलग्नात् वर्षलग्नाद्गोचरादमुकामुक४।८।१२स्थान स्थितसूर्यादिक्रूरग्रह तज्जनितारिष्ट निवृत्ति पूर्वकं-दशान्तरदशा चोपदशा दिनदशाजनितारिष्ट ज्वर पीड़ा, दाहपीड़ा, नेत्रकर्णोदरादिपीड़ा, निवृत्तिपूर्वकं अल्पायुनिवृत्ति पूर्वकश्चाधिदैविकाधिभौतिकाध्यात्मिकजनित क्लेश कायिक वाचिक मानसिक त्रिविधाघौघ निवृत्ति पूर्वकं शरीरारोग्यार्थंपरमैश्वर्यादिप्राप्त्यर्थंच ॥ मार्कण्डेय उवाज ॥ ॐसावर्णिः सूर्यतनयो यो मनुःकथ्यतेष्टमः ॥ निशामय तदुत्पत्तिं विस्तराद्गदतोममेत्यारभ्य सावर्णिर्भवितामनुरित्यन्तपरकस्य मार्कण्डेय पुराणान्तर्गतस्य देवी माहात्म्य प्रकाशकस्य महाकाली महालक्ष्मी महासरस्वती देवताकस्य दशांगयुक्तस्यापमृत्युवारणायाष्टोत्तरशताद्यावन्ते त्र्यम्बकमन्त्र युक्तस्य शापोत्कीलनमन्त्र युक्तस्य चादौ रात्रिसूक्तस्यान्ते देवी सूक्तस्यामुक मन्त्रेण प्रतिमन्त्र सम्पुटितस्य यथा संख्यकावृत्ति पाठमहंकारिष्ये ॥ यजमानपक्षे 'ब्राह्मण द्वारा कारयिष्ये ।'

नान्ते ॥ अस्माकंसर्वेषांसकुटुंबानां क्षेमस्थैर्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थंसमस्तमंगलावाप्त्यर्थं अमुक गोत्रस्य अमुकनाम्नोमम (यजमानस्य) श्रीजगदम्बा प्रसादसिद्धिद्वारा सर्वापन्निवृत्तिपूर्वक सर्वाभीष्ट फलावाप्ति धर्म्मार्थ काम मोक्ष चतुर्विध पुरुषार्थ सिद्ध्यर्थं राजद्वारतः व्यापारतश्च लाभार्थं विजयार्थं श्री महाकाली महालक्ष्मी महासरस्वती देवता प्रीत्यर्थं कवचार्गला कीलक पठन एकादशन्यास पूर्वक नवार्ण मन्त्राष्टोत्तरशत जप रात्रिसूक्त पठन पूर्वकं देवीसूक्त पठन नवार्ण मन्त्राष्टोत्तर शत जप रहस्य त्रय पठनान्तं मध्ये मार्कण्डेय उवाच इत्यारम्य सावर्णिर्भविता मनुरित्यन्तं ( अमुक मंत्र संपुटितं ) श्री चण्डी सप्तशत्याः शत पाठं (नवपाठं) करिष्ये ॥ (ब्राह्मण द्वारा कारयिष्ये) ॥ नित्य संकल्पः ॥ पूर्व संकल्पित कामना सिद्धये शत चण्डी (नवचण्डी) संख्या पूर्तये पूर्व संकल्पित रीताद्य पाठाख्यं कर्म करिष्ये ।। यजमानपक्षे ॥ करिष्यामि ॥ इति ॥

पुस्तक पूजनम् ॥

ॐ नमः पिशाचि नि करंकिनि त्रिशूल खड्ग हस्ते सिंहारूढे एह्येहि आगच्छ आगच्छ इमां पूजां गृहाण २ स्वाहा श्री सप्तसती स्वरूपिण्यै ह्रीं चंडिकायै

नमः ॥ यथोपचारैः पुस्तकपूजनं विधाय ॥ अथ शापोद्धारः ॥ ७ बार आदि अन्त में ॥

ॐ ह्रीं क्लीं श्रां क्रीं चण्डिकादेव्यै शापनाशानुग्रहं कुरु २ स्वाहा ॥ उत्कीलनम् ॥ आदि अन्त में २१ बार जपना ॥ ॐ श्रीं क्लीं ह्रीं सप्तशती चण्डिका उत्कीलनं कुरु २ स्वाहा ॥ मृतसंजीवनी विद्या ॥ ७ बार आदि में जपना ॥ ॐ ह्रीं ह्रीं वं वं ऐं ऐं मृत संजीवनी विद्या मृतमुत्थापयोत्थापय क्रीं ह्रीं ह्रीं वं स्वाहा ॥

अथवा, मरीच कल्पोक्त—सप्तशती शापविमोचनम् । प्रणवं पूर्व मुद्धृत्य रमा बीजं ततः परम् ॥ रमा कामं ततः क्रोधं तारं वाग्भव संयुतम् ॥१॥ क्षोभं मोहं ततः पश्चात्कीलयेति त्रिधा द्विठम् ॥ शापमोचनं कृत्वा चण्डी पाठेनियोजयेत् ॥२॥ ॐ श्रीं श्रीं क्लीं हूँ ॐ ऐं क्षोभय मोहय उत्कीलय ३ ठं ठं ॥ पूर्वमष्टोत्तरशतं जप्त्वा पश्चान्न्यास पूर्वकं सप्तशती पाठाद्यथायोग्यकामनासिद्धिर्भविष्यतीतिनान्यथा ॥ अन्य प्रकारः ॥

अथ चण्डिका शाप विमोचनम् ॥

ॐ अस्य श्रीचण्डिकाया: ब्रह्मवशिष्ठ विश्वामित्र शाप विमोचन मंत्रस्य वशिष्ठ नारद संवाद साम

वेदाधिपति ब्रह्मा ऋषयः सर्व्वैश्वर्य्यं कारिणी श्रीदुर्गा देवताचरितत्रयँ बीजं ह्रीं शक्तिः त्रिगुणात्म स्वरूपिणी चण्डिकाशापविमुक्तौ मम संकल्पित कार्य्यं सिद्ध्यर्थे जपे विनियोगः ॥ ॐ (ह्रीं) रीं रेतः स्वरूपिण्यै मधुकैटभमर्दिन्यै ब्रह्मवशिष्ठ विश्वामित्र शापाद् विमुक्ता भव ॥१॥ ॐ श्रींबुद्धि स्वरूपिण्यै महिषासुर सैन्यनाशिन्यै ब्रह्मवशिष्ठ विश्वामित्र शापाद् विमुक्ता भव॥२॥ॐ रँ रक्त स्वरूपिण्यै महिषासुर मर्दिन्यै ब्रह्मवशिष्ठ विश्वामित्र शापाद् विमुक्ता भव ॥३॥ ॐ क्षुं क्षुधा स्वरूपिण्यै देव वन्दितायै ब्रह्म वशिष्ठ विश्वामित्र शापाद्विमुक्ता भव ॥४॥ ॐ छां छाया स्वरूपिण्यै दूत संवादिन्यै ब्रह्मवशिष्ठविश्वामित्र

---

अथ सर्व मन्त्रोत्कीलनविधिः तन्त्रान्तरे ॥ मूलं नवार्णं वा ॥ ओं ह्रीं क्लीं दस्रों दमलवर पीडं मलवर फ्रीं ओं ष्रां त्रीं ष्रूं त्रैं त्रौं ष्रः उत्कीलय२ स्वाहा ॥ ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे मूलम्७वार जयन्ती मंगला कालीभद्रकाली कपालिनी ॥ दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तुते ॥ १ ॥ ओं ह्रीं क्लीं ह्रीं ष्रोः ऐं दमलवर फ्रीं उमलवर फ्रां ओं क्लीं उत्कीलय २ स्वाहा मूलम१स्वाहा ॥ इत्युत्कीलनम ॥ ओं विशुद्ध ज्ञान देहाय त्रिवेदी दिव्यचक्षुषे ॥ श्रेयः प्राप्तिनिमित्ताय नमः सोमार्धं धारिणे त्रैलोक्यं वशी कुरु२दमलवर फ्रीं ओं मूलम१इति प्रथम श्लोकं समापयेत् ॥ इत्यर्गलामोक्षः ॥ अथ मूलेन षडंग कवच पाठः ११ न्यासः इत्युत्कीलम् । अथ शापमोचन मन्त्रः ॥ ओं श्रीं ह्रीं क्लीं क्रां क्रीं चण्डिकादेव्यै शापनाशानुग्रहं कुरु२ स्वाहा ॥ आदावन्ते७वारं पठेत् ॥ ओं श्रीं क्लीं ह्रीं सप्तशती चण्डिका उत्कीलनं कुरुकुरु स्वाहा ॥ आदावन्ते २१वारं पठेत् ॥

शा० ॥५॥ ॐ शं शक्ति स्वरूपिण्यै धूम्रलोचन घातिन्यै ब्रह्मवशिष्ठ विश्वामित्र शा० ॥६॥ ॐ तृं तृषा स्वरूपिण्यै चंडमुंड वध कारिण्यै ब्रह्मवशिष्ठ वि० शा० ॥७॥ ॐ चां चांति स्वरूपिण्यै रक्तबीज वध कारिण्यै ब्रह्मवशिष्ठ विश्वामित्र शा० ॥८॥ ॐ जां जातिस्वरूपिण्यै निशुंभवधकारिण्यै ब्रह्मवशिष्ठ विश्वा-मित्र शा० ॥९॥ ॐ लं लज्जास्वरूपिण्यै शुंभवधकारिण्यै ब्रह्मवशिष्ठ विश्वामित्र शा० ॥१०॥ ॐ शां शान्ति-स्वरूपिण्यै देवस्तुतन्यै ब्रह्मवशिष्ठ विश्वामित्र शा० ॥११॥ ॐ श्रं श्रद्धा स्वरूपिण्यै सकल फलदात्र्यै ब्रह्मवशिष्ठ विश्वामित्र शा० ॥१२॥ ॐ कां कान्ति स्वरूपिण्यै राज वरप्रदानायै ब्रह्मवशिष्ठ विश्वामित्र शा० ॥१३॥ ॐ मां मातृ स्वरूपिण्यै अनर्गमहिम्न सहितायै ब्रह्मवशिष्ठ विश्वामि० ॥१४॥ ॐ ह्रीं श्रीं हूं दुं दुर्गायै सं सर्वैश्वर्य्य कारिण्यै ब्रह्मवशिष्ठ विश्वामित्र शापा० ॥ १५ ॥ ॐ ऐं ह्रीं क्लीं नमः शिवायै अभेद्य कवच स्वरूपिण्यै ब्रह्मवशिष्ठ० ॥१६॥ ॐ क्रीं काल्यै कालि ह्रीं फट् स्वाहायै ऋग्वेद स्वरूपिण्यै ब्रह्मवशिष्ठ० ॥१७॥ ॐ ऐं ह्रीं क्लीं महा-काली महालक्ष्मी महासरस्वती स्वरूपिणी त्रिगुणा-त्मिकायै दुर्गा देव्यै नमः ॥१८॥ इत्येवंहि महामंत्रा

न्पठित्वा परमेश्वरी॥ चण्डी पाठं दिवारात्रौ कुर्य्या देव न सँशयः ॥१९॥ एवं मंत्रं न जानाति चण्डी पाठं करोति यः॥ आत्मानं चैव दातारं क्षयं कुर्य्यान्न संशयः ॥२०॥

इतिश्री रुद्रयामले महातंत्रे दुर्गा कल्पे चण्डिकाशाप विमोचनम् सम्पूर्णम्॥

---

पुरश्चरणे दश प्रकाराः शारदायां ११ पटले ॥

जपो होमस्तर्पणञ्च स्वाभिषेकोऽघर्मर्षणम् ॥ सूर्याद्र्घं जल (पानं) दानंस्यात्प्रणामं देवपूजनम् ॥ ब्राह्मणानां भोजनञ्च पूर्व पूर्व दशांशतः ॥ इदं सर्व मन्त्रपुरश्चरणे ज्ञेयम् ॥

बाल्मीकीय रामायणे बालकाण्डे ॥ १२ सर्गे

विधि हीनस्य यज्ञस्य सद्यः कर्त्ता विनश्यति ॥

तद्यथा विधि पूर्वन्तु क्रतुरेषः समाप्यते ॥ १८।१९

कुलार्णव पंचदशोल्लासे ॥

संसार दुःख भूमेश्च यश्चोच्छेदु सिद्धिमात्मनः ॥ पंचोक्तोपासनेनैव मन्त्र जापी व्रजेत्सुखम् ॥ पूजा त्रैकालिकी नित्यंजपस्तर्पणमेव च ॥ होमो ब्राह्मण भुक्तिश्च पुरश्चरण मुच्यते ॥ रुदु यदङ्ग विहीयेत तत्संख्या द्विगुणोजपः ॥ ज्ञानाज्ञान कृतं सर्वं प्रणश्यति जपात् प्रिये ! ॥

पराम्न भक्षणात्सिद्धि हानिः तत्रैव ॥

यस्यान्न पानमश्नाति कुरुते धर्म्म संचयम् ॥ अन्नदातुः फलंचार्द्धं कर्तुश्चार्द्धं न संशयः ॥ तस्मात्सर्व प्रयत्नेन परान्नं वर्जयेत्सुधीः ॥ पुरश्चरण काले च काम्य कर्मस्वपीश्वरि ! ॥ जिह्वादग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ॥ मनोदग्धं परस्त्रीभिः कार्यं सिद्धिः कथंभवेत् ॥

नीलतंत्रे ॥ भक्षणे दूषिता जिह्वा मिथ्याया भाषणेनवै ॥ कलहैर्दूषिता जिह्वानानादोषेणदूषिता ॥ तत्कथंपामरोलोकाजिह्वया प्रजपेन्मनुं ॥ संशोधनमनाचम्यनजपेत्पामरः क्वचित् ॥ आदौमायां ततः कूर्चंपुनर्मायां च सुन्दरि । मुखं संशोधयेद्देवियदीच्छेत्सिद्धि मुत्तमाम् ॥

न्यासो ध्यानावाहनेच नाम तृकानि चाप्यनु ॥

दु[illegible] हृदयं चैव कवचं [illegible] कीलकम् ॥

श्री गणेशाय नमः ॥

## ॥ अथ कवच प्रारम्भः ॥

ॐ अस्य श्री चण्डी कवचस्य ब्रह्मा *ऋषिः अनुष्टुप् छन्दः चामुण्डा देवता अङ्ग न्यासोक्त मातरोबीजं दिग्बन्ध देवतास्तत्वं श्री जगदम्बा प्रीत्यर्थे सप्तशतो पाठाङ्गत्वे जपे विनियोगः ॥

ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

ॐ यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
यन्नकस्यचिदाख्यातं तन्मे ब्रूहि पितामह ! ॥१॥
ब्रह्मोवाच॥ अस्ति गुह्यतमं विप्र ! सर्वभूतोपकारकम्॥
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ! ॥२॥
प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी ॥ तृतीयं

---

श्री देवीजी के लिये नमस्कार ॥ मार्कण्डेय ऋषि बोले ॥ हे ब्रह्माजी संसार में जो अत्यन्त छिपा हुआ रहस्य है जिससे मनुष्यों की सब प्रकार रक्षा होती है । जिसको किसी से भी आपने न कहा हो उसको मुझ से कहिये ॥ १ ॥ ब्रह्माजी ने कहा हे विप्र ! अत्यन्त छिपा हुआ सर्व प्राणीमात्र का उपकार करने वाला पुण्य को देने वाला देवी का कवच है, हे महामुनि ! तुम मुझसे सुनो ॥२॥ अब क्रम से कवच की अधिष्ठात्री नव

---

दशाङ्गमेतद्विज्ञेयमिति गुह्यं सनातनम् ॥
दशांगानि च जप्त्वा तु पश्चात्सप्तशतां पठेत् ॥
हरगौरीतन्त्रे

*ऋषि की व्युत्पत्तिः ॥

ऋषन्ति जानन्ति सर्वमिति ऋषयः मन्त्रद्रष्टारः ॥ सत्य बचना वा ॥ ऋषिगतौ ॥

चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥३॥ पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ॥ सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥४॥ नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः ॥ उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥५॥ अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे ॥ विषमे दुर्गमे चैव

---

मूर्तियों के नाम ध्यान के लिये लिखते हैं। पहिली शैलपुत्री, (हिमालय की बेटी शैलराज हिमालय ने तप करके प्रार्थना की तब भगवती ने पुत्री रूप हो शैलराज के यहां जन्म लेकर दोनों को प्रसन्न किया इसी से शैलपुत्री नाम हुआ) दूसरी ब्रह्मचारिणी, (सच्चिदानन्द प्राप्त करने के लिये) तीसरी चन्द्रघण्टा वा (चन्द्रमा के समान निर्मल) चौथी कूष्माण्डा (कुत्सित संताप रूपी दुःखों से युक्त अण्डे के समान, आधिभौतिक, आधिदैविक आध्यात्मिक त्रिविध दुःखों से युक्त मांस पेशी वाले अंडे कूष्मांड "पेठा" रूपी संसार को खाने वाली) ॥३॥ पांचवी स्कन्दमाता (स्वामिकार्तिक को जो पालन करने के लिये नियुक्त हुई) छठवीं कात्यायनी ( कात्यायन ऋषि की कन्या ) सातवीं कालरात्री ( सब प्राणी मात्र को मारनेवाला काल उसको भी मारने वाली ) आठवीं महागौरी ( शिवजी ने क्रीड़ा में काली नाम से पुकारा तब भगवती का रंग श्याम होगया बाद में तप करने से फिर गौर वर्ण हुआ) वही महागौरी हुई ॥४॥ नवमी सिद्धिदात्री हैं सब कार्य मात्र की सिद्धि करनेवाली यह नव दुर्गा अर्थात् नव देवियां के नाम सर्वज्ञ ब्रह्माजी ने कहे हैं ॥५॥ अब आगे श्लोकों से पाठ का फल कहते हैं ॥ जो मनुष्य जलती हुई

भयार्त्ताः शरणं गताः ॥६॥ न तेषां जायते किञ्चिदशुभं रणसंकटे ॥ नापदं तस्य पश्यामि शोकदुःखभयं न हि ॥७॥ यैस्तुभक्त्या स्मृता नूनं तेषां वृद्धिः प्रजायते ॥ ये त्वां स्मरन्ति देवेशि ! रक्षसे तान्न संशयः ॥८॥ प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥ ऐन्द्री गजसमारूढा वैष्णवी गरुडासना ॥६॥ माहेश्वरी वृषारूढा कौमारी शिखि-वाहना ॥ लक्ष्मीःपद्मासना देवी पद्महस्ता हरिप्रिया

---

अग्नि के बीच में लड़ाई में (दुश्मनों से घिर गया हो), किसी बड़ी विपत्ति में, भय ( र ) से दुःखी हो भगवती की शरण में जाने से ॥ ६ ॥ उनका लड़ाई के संकट में बाल भी बांका ('कुछ बुराई') नहीं होता ॥ सर्वदा मंगल ही होता है सब दुःखों को दूर करने वाली देवी उसकी आपत्ति को दूर करती है ॥७॥ जो मनुष्य निश्चय भक्ति से सदा स्मरण करते हैं उनको धर्म-अर्थ (धन) काम (कामना) मोक्ष (बार बार जन्म से रहित होते हैं) मिलते हैं। अर्थात् उन नामों में से एक भी याद करके स्मरण करने से सब दुःख दूर होते हैं। और वृद्धि ही होती है अब आगे देवियों का वर्णन ब्रह्मा जी इस प्रकार करते हैं। कि जो भक्त तुम्हारा स्मरण करते हैं उनकी तुम हमेशा रक्षा करती हो इसमें सन्देह नहीं ॥८॥ चामुण्डा प्रेत पर बैठी है वाराही भैंसे पर ऐन्द्री हाथी पर वैष्णवी गरुड़ पर ॥६॥ माहेश्वरी बैल पर कौमारी मोर पर लक्ष्मी कमल पर और कमल का फूल हाथ में

॥१०॥ श्वेतरूपधरादेवीईश्वरी वृषवाहना ॥ ब्राह्मी हंससमारूढा सर्वाभरण भूषिता ॥११॥ इत्येता मातरः सर्वाः सर्वयोगसमन्विताः ॥ नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥१२॥ दृश्यन्ते रथमारुढा देव्यः क्रोधसमाकुलाः ॥ शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥१३॥ खेटकं तोमरं चैव परशुं पाशमेव च ॥ कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ॥१४॥ दैत्यानांदेहनाशाय भक्तानामभयाय च ॥ धारयन्त्यायुधानीत्थं देवानां

---

लिये हुए विष्णु की प्रिया (स्त्री) हैं ॥१०॥ ईश्वरी देवी सफेद रूप धारण किये बैल पर सवार हैं तथा ब्राह्मी हंस पर और सब प्रकार के गहने पहने शोभायमान हैं ॥ ११ ॥ इस तरह ये सब देवियाँ सब योगों से युक्त अनेक प्रकार गहनों की शोभा से शोभित तथा नाना प्रकार के रत्नों से शोभायमान हैं ॥ १२ ॥ सब (नव) देवियाँ (भक्त की रक्षा के लिये) क्रोध से युक्त रथ में बैठी हुई दीखती हैं। अब इनके हथियारों को ब्रह्मा जी बताते हैं। शंख चक्र, गदा, शक्ती हल, मूसल, ॥१३॥ खेटक, तोमर, परशु, पास, कुन्त, त्रिशूल, शार्ङ्ग दूसरे के शस्त्रों को आकाश में नष्ट करने वाले हथियार को खेटक कहते हैं। जिसके चलाने से शत्रु मरता है उस शस्त्र को तोमर कहते हैं, और शत्रुओं को जो काटता है उसको परशु कहते हैं, परशु, फरसा, पाश, (फंदा, फांसी,) कुन्त, (भाला) त्रिशूल सींग का बना हुआ शस्त्र शार्ङ्ग धनुष है ॥१४॥ ये देवियाँ राक्षसों के शरीर नष्ट



च हिताय वै ॥१५॥ नमस्तेऽस्तु महारौद्रे महाघोर-
पराक्रमे ॥ महाबले महोत्साहे महाभय विनाशिनि ॥
१६॥ त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्द्धिनि ।
प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ॥१७॥
दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ॥ प्रती-
च्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ॥१८॥
उदीच्यां पातु कौमारी ईशान्यां शूलधारिणी । ऊर्ध्वं
ब्रह्माणि मे रक्षेदधस्ताद्वैष्णवी तथा ॥१९॥ एवं

---

करने और भक्तों के निर्भय के लिये और देवताओं के हितके लिए इस प्रकार शस्त्र धारण करतीं हैं ॥१५॥ कवच पढ़ने से पूर्व देवीजी का ध्यान करना चाहिये अतः ध्यान लिखे जाते हैं। हे महारौद्रे हे महाघोरपराक्रमे ! तुमको नमस्कार है हे महाबले ! (मायाशक्ति रूप जिसका बल हो) हे महोत्साहे ! (संसार की रक्षा करने में जिसका उत्साह हो) हे महाभयविनाशिनि ! (मृत्यु के समान जो बड़ा डर (भय) जिसके ज्ञान देने से नाश हो ) ॥१६॥ हे देवि ! हे दुःख से दर्शन देने वाली हे शत्रुओं के भय को बढ़ाने वाली मेरी रक्षा करो मेरा पालन करो ॥

दिग्रक्षा

पूर्व में ऐन्द्री मेरी रक्षा करे अग्नि कोण में अग्नि देवता रक्षा करे ॥१७॥ दक्षिण में वाराही रक्षा करे नैर्ऋति में खड्ग-धारिणी पश्चिम में वारुणी वायव्य में मृगवाहिनी ॥ १८ ॥ उत्तर में कौमारी ईशान्य में शूलधारिणी ऊपर आकाश में ब्रह्माणी और नीचे वैष्णवी ॥१९॥ इस प्रकार दशदिशाओं में



दशदिशो रक्षेच्चामुण्डा शववाहना॥ जया मे चाग्रतः पातु विजया पातु पृष्ठतः ॥२०॥ अजितावामपार्श्वे तु दक्षिणे चापराजिता ॥ शिखामुद्योतिनी रक्षे-दुमामूर्द्ध्नि व्यवस्थिता ॥२१॥ मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी। त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ॥२२॥ शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयो-र्द्वारवासिनी ॥ कपोलौ कालिका रक्षेत्कर्णमूले तु शाङ्करी ॥२३॥ नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ अधरेचामृतकला जिह्वायां च सर-स्वती ॥ २४ ॥ दन्तान्रक्षतु कौमारी कण्ठदेशे तु

(प्रेत) मुर्दे के ऊपर बैठी हुई चामुण्डा रक्षा करे ॥

शरीर की रक्षा

जयादेवी मेरे आगे विजया पीछे ॥ अजिता बाईं तरफ और दाईं तरफ अपराजिता बैठे ॥२०॥ चोटी की उद्योतिनी रक्षा करे उमा सिर की रक्षा करे ॥२१॥ मालाधरी माथे की रक्षा करे दौनों भ्रू (भौंह) की यशस्विनी रक्षा करे ॥ भौंह के बीच में त्रिनेत्रा रक्षा करे नासिका की यमघण्टा रक्षा करे ॥२२॥ आँखों के बीच में शंखिनी रक्षा करे कानों के बीच में द्वारवासिनी रक्षा करे ॥

गालों की कालिका रक्षा करे, कान, की जड़ में शांकरी, रक्षा करे ॥२३॥ नासिका की सुगन्धा रक्षा करे ऊपर के ओष्ठ की चर्चिका रक्षा करे ॥ और अधर की अमृत कला रक्षा करे और जिह्वा की सरस्वती रक्षा करे ॥२४॥ दाँतों की कौमरी

चण्डिका ॥ घण्टिकां चित्रघण्टा च महामाया च तालुके ॥२५॥ कामाक्षी चिबुकं रक्षेद्वाचं मे सर्व-मंगला॥ ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ॥ २६॥ नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी । स्कन्धयोः खड्गिनी रक्षेद्बाहू मे वज्रधारिणी ॥२७॥ हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीषु च । नखा-ञ्छूलेश्वरी रक्षेत्कुक्षौ रक्षेत्कुलेश्वरी ॥२८॥ स्तनौ रक्षेन्महादेवी मनःशोक विनाशिनी ॥ हृदये ललिता देवी उदरे शूलधारिणी ॥२६॥ नाभौ च कामिनी रक्षेद्गुह्यं गुह्येश्वरी तथा । पूतना कामिका मेढ्रं

रक्षा करे गले के बीच में चण्डिका रक्षा करे चित्र घण्टा गले की रक्षा करे महामाया तालू की रक्षा करे ॥ २५ ॥ कामाक्षी ठोड़ी की रक्षा करे वाणी की सर्व मङ्गला रक्षा करे ॥ गर्दन की भद्रकाली रक्षा करे पीठ (मेरुदंड) की धनुर्धरी ॥ २६ ॥ नीलग्रीवा कण्ठ से बाहर की रक्षा करे। कण्ठ की नली की नल-कुबरी रक्षा करे । खड्ग धारिणी दोनों कन्धों की रक्षा करे दोनों बाहुओं की बज्र धारिणी रक्षा करे ॥२७॥ दण्डिनी हाथों की रक्षा करे अम्बिका अङ्गुलियों की रक्षा करे ॥ नखों की शूले श्वरी रक्षा करे (कुख) कुक्षि की कुलेश्वरी रक्षा करे ॥२८॥ स्त-नकी महादेवी रक्षा करे मन की शोकविनाशिनी रक्षा करे ॥ हृदय की ललिता देवी रक्षा करे उदर की शूलधारिणी रक्षा करे ॥२६॥ नाभि की कामिनी रक्षा करे गुह्येश्वरी गुह्य (गुप्त) स्थान की रक्षा करे ॥ पूतना कामिका लिंग की रक्षा करे गुदा

गुदे महिषवाहिनी ॥३०॥ कट्यां भगवती
रक्षेज्जानुनी विन्ध्यवासिनी । जङ्घे महाबला
रक्षेत्सर्वकामप्रदायिनी ॥ ३१ ॥ गुल्फयोर्नारसिंही
चपादपृष्ठे तु तैजसी । पादाङ्गुलीषु श्रीरक्षेत्पादाधः
स्तलवासिनी ॥ ३२ ॥ नखान्दंष्ट्रा कराली च
केशांश्चैवोर्ध्वकेशिनी ॥ रोमकूपेषु कौबेरी त्वचं
वागीश्वरी तथा ॥३३॥ रक्तमज्जावसामांसान्य-
स्थिमेदांसि पार्वती ॥ अन्त्राणि कालिरात्रिश्च पित्तं
च मुकटेश्वरी॥३४॥ पद्मावती पद्मकोशेकफे चूडाम-
णिस्तथा ॥ ज्वालामुखी नखज्वालामभेद्या सर्वसन्धि-
षु ॥ ३५ ॥ शुक्रं ब्रह्माणि मे रक्षेच्छायां छत्रेश्वरी

---

की महिष बाहिनी रक्षा करे ॥३०॥ कमर का भगवती रक्षा करे जांघ की विंध्यवासिनी रक्षा करे ॥ जंघा की महाबला सब काम देने वाली रक्षा करे ॥३१॥ गुल्फ (पिंडली) की नारसिंही रक्षा करे पैर के ऊपर की तैजसी रक्षा करे ॥ पैर की अंगुलियों की श्रीधरी रक्षा करे पैर के नीचे की तलवासिनी रक्षा करे ॥३२॥ नखों की द्रंष्ट्राकराली रक्षा करे बालों की ऊर्ध्व केशिनी रक्षा करे ॥ रोम छिद्रों की कौबेरी रक्षा करे चमड़े की वागीश्वरी रक्षा करे ॥३३॥ रक्त, मज्जा, वसा, (चर्वी) माँस, अस्थि, मेद की पार्वती रक्षा करे ॥ आँतों की कालरात्री रक्षा करे पित्त की मुकुटेश्वरी रक्षा करे ॥३४॥ पद्मकोश की पद्मावती रक्षा करे कफ की चूड़ामणि रक्षा करे ॥ नस जाल की ज्वालामुखी करे सब संधियों की अभेद्या रक्षा करे ॥३५॥ ब्रह्माणी मेरे वीर्य (शुक्र) की रक्षा करे

तथा ॥ अहङ्कारं मनो बुद्धिं रक्षेन्मे धर्मधारिणी ॥ ३६ ॥ प्राणापानौ तथा व्यानमुदानञ्च समानकम् ॥ वज्रहस्ता च मे रक्षेत्प्राणं कल्याणशोभना ॥ ३७ ॥ रसेरूपे च गन्धे च शब्देस्पर्शे च योगिनी ॥ सत्त्वं रजस्तमश्चैव रक्षेन्नारायणी सदा ॥ ३८ ॥ आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी ॥ यशः कीर्तिं च लक्ष्मीं च धनं विद्यां च चक्रिणी ॥ ३९ ॥ गोत्रमिन्द्राणि मे रक्षेत्पशून्मे रक्ष चण्डिके ॥ पुत्रान्रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी ॥४०॥ पन्थानं सुपथा रक्षेन्मार्गं क्षेमकरी तथा !

---

छाया की छत्रेश्वरी रक्षा करे ॥ हे धर्म धारिणी मेरे अहंकार, मन, बुद्धि की रक्षा करो ॥३६॥ तथा प्राण, अपान, व्यान, उदान, समान इनकी वज्रहस्ता रक्षा करे और प्राण कल्याण की शोभना रक्षा करे ॥३७॥ रस, रूप, गंध शब्द और स्पर्श को योगिनी रक्षा करे ॥ सतोगुण, रजोगुण, तमोगुण की नारायणी रक्षा करे ॥ ॥३८॥ आयु की वाराही तथा धर्म की वैष्णवी रक्षा करे ॥ यश, लक्ष्मी, कीर्ति, धन और विद्या की सदा चक्रिणी रक्षा करे ॥३९॥ इन्द्राणि मेरे गोत्र की रक्षा कर हे चण्डिके मेरे पशुओं की रक्षा कर ॥ महालक्ष्मी पुत्रों की रक्षा करे भार्या की भैरवी रक्षा करे ॥ ४० ॥ रास्ते की सुपथा रक्षा करे दुर्गम मार्ग में क्षेमकरी रक्षा करे राजद्वार (कचैरी) में महालक्ष्मी रक्षा करे सब तरफ से भयों में बैठी हुई विजया रक्षा करे ॥४१॥ यदि कवच में कोई स्थान रह गया हो तो उसकी पाप-

राजद्वारे महालक्ष्मीर्विजया सर्वतःस्थिता ॥ ४१ ॥
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ॥ तत्सर्वं
रक्ष मे देवि जयंती पापनाशिनी ॥४२॥ पदमेकं
नगच्छेत्तु यदीच्छेच्छुभमात्मनः ॥ कवचेनावृतो
नित्यं यत्र यत्रैव गच्छति ॥४३॥ तत्र तत्रार्थलाभश्च
विजयः सर्वकामिकः । यं यं चिन्तयते कामं तं तं
प्राप्नोति निश्चितम् ॥ परमैश्वर्यमतुलं प्राप्स्यतेभूतले
पुमान् ॥४४॥ निर्भयो जायते मर्त्यः संग्रामेष्वपरा-
जितः ॥ त्रैलोक्येतु भवेत्पूज्यः कवचेनावृतःपुमान्
॥४५॥ इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥
यः पठेत्प्रयतो नित्यंत्रिसन्ध्यं श्रद्धयान्वितः॥४६॥
दैवीकला भवेत्तस्य त्रैलोक्येष्वपराजितः॥ जीवेद्वर्ष-

---

नाशिनी जयन्ती रक्षा करे ॥४२॥ यदि आत्मा का कल्याण चाहता होतो कवच के बिना एक कदम भी न चले ॥ कवच पढ़ने से यह फल मिलता है । कवच से रक्षा करके नित्य जहां जहां भी जाता है ॥४३॥ वहां २ ही अर्थ, लाभ, विजय और सर्व कामनाओं में सिद्धि मिलती है । जिस २ काम की चिन्ता करता है उस २ को निश्चित पाता है । पृथ्वी पर परम अतुल ऐश्वर्य को पाता है ॥४४॥ पुरुष भय-रहित होता है संग्राम में अपराजित होता है ॥ कवच से रक्षा किया पुरुष त्रैलोक्य में पूज्य होता है ॥४५॥ देवताओं को भी दुर्लभ इस देवी के कवच को जो कोई नित्य श्रद्धा सहित तीन वार पढ़ता है ॥४६॥

शतंसाग्रमपमृत्युविवर्जितः ॥४७॥ नश्यन्तिव्याधयः सर्वे लूताविस्फोटकादयः ॥ स्थावरंजङ्गमंचैव कृत्रिमं चापियद्विषम् ॥४८॥ अभिचाराणि सर्वाणि मन्त्रयन्त्राणिभूतले ॥ भूचराः खेचराश्चैव कुलजाश्चोपदेशिकाः ॥ ४९ ॥ सहजाः कुलजामाला डाकिनी शाकिनी तथा ॥ अन्तरिक्ष चराघोरा डाकिन्यश्चमहाबलाः ॥ ५० ॥ ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ॥ ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः ॥५१॥ नश्यन्ति दर्शनात्तस्य कवचे हृदि

उसकी दैवकला (देवसंपत्ती) होती है। तीनों लोकों में अपराजित होता है। कवच से रक्षा किया हुआ पुरुष अपमृत्यु से रहित १०० वर्ष तक जीता है ॥४७॥ लूता (मकड़ी) जिन कीड़ों के द्वारा शरीर की खाल कटती है। विस्फोटक, (शीतला) के फफोले, कोढ़ आदि सब रोग नष्ट होते हैं ॥ कवच से पेड़ (कनेर, भांग, कुचला, आदि) तथा अफीम का विष सर्प आदि का विष और अतिरिक्त सब तरह के साधारण विष प्रयोग मन्त्र यन्त्र नष्ट होते हैं ॥४८॥ पृथ्वी पर के आकाश के जल के देवता और उपदेश से सिद्ध होने वाले देवता ॥४९॥ साथ में उत्पन्न होने वाले देवता कुल में पैदा हुए गंडमाला (कंठमाला) तथा डाकिनी शाकिनी ये नीच देवता कवच धारण करने से नष्ट होते हैं। आकाश में चलने वाले, डराने वाले, बल वाली डाकिनियां ॥५०॥ और ग्रह भूत, पिशाच, यक्ष, गन्धर्व, राक्षस, ब्रह्म राक्षस, वेताल, कूष्मांड भैरवादि कवच को हृदय में रखने से नष्ट हो जाते हैं ॥५१॥ तथा राजा के पास से मान की उन्नति

संस्थिते ॥ मानोन्नतिर्भवेद्राज्यन्तेजोवृद्धिकरं परम्
॥५२॥ यशसा वर्द्धते सोऽपिकीर्तिमण्डित भूतले ॥
जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचंपुरा ॥ ५३ ॥
यावद्भूमण्डलं धत्ते सशैलवनकाननम् ॥ तावत्तिष्ठ-
ति मेदिन्यां सन्ततिः पुत्र पौत्रकी ॥५४॥ देहान्ते
परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ प्राप्नोति पुरुषो
नित्यं महामायाप्रसादतः ॥५५॥ लभते परमं रूपं
शिवेन सह मोदते ॐ॥ ५६ ॥ इति श्री वाराहपुराणे
हरिहरब्रह्मविरचितं देव्याः कवचं समाप्तम् ॥ १ ॥

होती है ( यह कवच ) तेज की वृद्धि करने वाला है ॥५२॥ उत्कृष्ट तेज बढ़ाने वाला है जो कवच को पढ़ता है वह कीर्ति मण्डित भूतल पर यश से बढ़ता है। पहले कवच कर के सप्तशतीचण्डी को जपने से ॥५३॥ जब तक पृथ्वी पर पहाड़ सहित बन हैं ॥ तब तक ( मनुष्य ) पुत्र पौत्र सहित पृथ्वी पर सुखसे बसता है ॥५४॥ और कवच के पढ़ने से मरने पर देवताओं से भी दुर्लभ स्थान को ॥ महा माया के प्रसाद से मनुष्य पाता है ॥ ५५ ॥ और परम रूप प्राप्त होकर शिव के साथ आनन्द पाता है ॥५६॥ पाठ में ऐसा बोलना :—ॐ देव्याः कवचं श्री जगदम्बार्पणमस्तु ॥

इति श्री घनश्याम गोस्वामी कृत दुर्गा कवच भाषा समाप्तः ॥

तन्त्रान्तर से ॥

अर्गला के सिद्ध प्रयोगों का विधान क्रम से लिखा जाता है। "जयन्ती मंगला काली" इस श्लोक के सम्पुट से महामारी ( प्लेग ) शान्ति होती है तथा सब प्रकार के उपद्रव भी। "मधुकैटभ विद्रावि

## अथ अर्गला स्तोत्रम् ॥

ॐ अस्य श्री अर्गला स्तोत्र मन्त्रस्य विष्णु-ऋषि अनुष्टुप् छन्दः श्री महालक्ष्मीर्देवता श्री जगदम्बाप्रीतये सप्तशती पाठांगे जपेविनियोगः॥

ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

ॐजयन्तीमङ्गला काली भद्रकाली कपालिनी ॥
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तुते

---

चण्डिका के लिये नमस्कार ॥ मार्कंण्डेय ऋषि बोले ॥

जय वाली, मोक्ष वाली सब दुष्टों को खाने वाली, भक्तों के देने के लिये कल्याण इकट्ठा करने वाली, खोपड़ी लेकर घूमने वाली, दुःख से प्राप्त होने वाली, क्षमा करने वाली, चित

---

वि० इस श्लोक के सम्पुट से राजचोर आदि का भय निश्चय नष्ट होगा। महिषासुर निर्नाश० मन्त्र से रिपुवर्ग का नाश। वन्दिताङ्घ्रियुगे० इस से राज सन्मान होगा। रक्तबीज वधे० शत्रु से भीति विनाश होगा। अचिन्त्य रूप चरिते० इस से रोग समूल नष्ट होगा। नतेभ्यः सर्वदाभक्त्या० इससे सर्वापत्ति का नाश। स्तुवद्भ्यो भक्ति पूर्वं० इसके जप वा सम्पुट से व्याधि नाश। चण्डिके सततं० ॥ सर्व सौभाग्य प्राप्त होगा। देहि सौभाग्य मारोग्यं० सर्व सुख प्राप्ति। केवल जप से सर्वार्थ सिद्धि। विधेहि द्विषतां नाशं०। सम्पुट वा जप से शत्रु का नाश। विधेहि देवि कल्याणं० से सर्वापत्ति का नाश तथा कुटुम्ब और पशुओं की रक्षा। विद्यावन्तं० इससे यश लक्ष्मी जय की वृद्धि होगी। प्रचण्ड-दैत्य दर्पघ्नि० विवाद तथा व्यवहार में जय होगी। चतुर्भुजे चतु० धर्म्म अर्थ काममोक्षादि प्राप्त होंगे। कृष्णेन संस्तु० पुरुषार्थ वृद्धि होगी। सुरासुर शिरो रत्न० से सर्वज्ञता प्राप्त होगी। इन्द्राणी पति सद्भाव० से चित्त की मलीनता नष्ट होगी। देवि प्रचण्ड, से जलोदर नाश होगा। देवि भक्तजनोद्दाम, से अनावृष्टि दूर होगी ॥ पत्नीं मनोरमां० से स्त्री प्राप्त होगी तथा सुख भी प्राप्त होगा ॥

॥१॥ जय त्वं देवि चामुण्डे जयभूतार्तिहारिणि ॥
जय सर्वगते देवि कालरात्रि नमोस्तुते ॥ २ ॥
मधुकैटभविद्राविविधातृवरदे नमः ॥ रूपं देहि जयं
देहि यशो देहि द्विषो जहि ॥३॥ महिषासुरनिर्नाश
भक्तानां सुखदे नमः ॥ रूपं देहि जयं देहि यशो
देहि द्विषो जहि ॥४॥ रक्तबीजवधे देवि चण्डमुण्ड-
विनाशिनि ॥ रूपं देहि जयं देहि यशो देहि द्विषो

---

(चैतन्य) शिव रूप वाली सब प्रपञ्चों को धारण करन वाली, देवों का पोषण करने वाली, पितृ पोषण करने वाली, ऐसे गुणों वाली देवी तुमको नमस्कार हो ॥१॥ हे चामुण्डे देवि ! हे मनुष्यों के क्लेश को नाश करने वाली तुम्हारी जय हो हे सर्वगते ! हे देवि ! हे कालरात्रि ! आपकी जय हो आपको नमस्कार है ॥२॥ हे मधुकैटभ को मारने वाली, ब्रह्मा को वर देने वाली, तुम को नमस्कार हो, रूप को दो, जय को दो, यश को दो, तथा काम, क्रोध, शत्रुओं को नष्ट करो ॥ ३ ॥ हे महिषासुर को मारने वाली, भक्तों को वर देने वाली तुमको नमस्कार हो रूप को दो, जय को दो, यश को तथा काम, क्रोध शत्रुओं को नष्ट करो ॥४॥ हे रक्त बीज को मारने वाली हे चण्ड मुण्ड नाशिनी तुमको नमस्कार हो, रूप को दो, जय दो, यशको दो तथा काम, क्रोध, शत्रुओं को नष्टकरो ॥५॥ हे शुम्भ निशुम्भ तथा धूम्राक्ष को मर्दन करने वाली तुमको नमस्कार हो, रूप दो, जय दो, यश दो तथा काम क्रोध शत्रुओं को



जहि॥ ६॥ वंदिताङ्घ्रियुगेदेवि सर्वसौभाग्यदायिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ७ ॥
अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ॥ रूपं
देहि जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥
नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ॥ रूपं
देहि जयं देहि यशो देहि द्विषो जहि ॥ ९ ॥
स्तुवद्भ्योभक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१०॥
चण्डिकेसततं ये त्वामर्चयन्तीह भक्तितः ॥ रूपं
देहि जयं देहि यशो देहि द्विषो जहि ॥११॥ देहि

---

नष्ट करो ॥६॥ हे ब्रह्मा, विष्णु, रुद्र आदिकों से चरण पुजाने वाली, देवताओं को शत्रु बाधा रहित राज्य देने वाली देवी तुमको नमस्कार हो, रूप, जय, यश को दो तथा काम, क्रोध, शत्रुओं को नष्ट करो ॥७॥ बृहत् चरित्र रूप से युक्त सब शत्रुओं को नष्ट करने वाली तुमको नमस्कार हो रूप को दो, जय को दो, यश को दो तथा काम, क्रोध, शत्रुओं को नष्ट करो ॥८॥ हे चण्डिके हे परब्रह्म रूपिणि सर्वदा भक्ति से नत हुये मुझे रूप दो जय दो यश दो और काम, क्रोध शत्रुओं को नष्ट करो ॥९॥ हे व्याधियों को नष्ट करने वाली भक्ति पूर्वक तेरी स्तुति करने से हे परब्रह्म महिषि रूप दो जय दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥ १० ॥ हे चण्डिके जो तुमको निरन्तर भक्ति से पूजते हैं। उनको रूप दो जय दो यश दो और काम क्रोध शत्रुओं का नष्ट करो ॥

सौभाग्यमारोग्यं देहि मे परमं सुखम् ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१२॥ विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १३ ॥ विधेहिदेवि कल्याणंविधेहिपरमांश्रियम् । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १४ ॥ सुरासुरशिरो-रत्ननिघृष्टचरणेऽम्बिके ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५ ॥ विद्यावन्तंयशस्वन्तं लक्ष्मीवन्तंजनं कुरु ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१६॥ प्रचण्डदैत्यदर्पघ्नि चण्डिके

---

११॥ हे प्रकाश रूपे अच्छे सौभाग्य को दो रोग रहित करो ब्रह्मानन्द को दो रूप को दो जय दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥१२॥ द्वेष करने वालों को नष्ट करके मुझे अत्यन्त बलवान् करो रूप दो जय दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥१३॥ हे देवि ! कल्याण विपुल धनसंपत्ति को करो रूप दो जय दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥ १४ ॥ हे देवि राक्षसों के मुकुट मणियों से घिसे हुए चरण वाली रूप को दो जय दो यश दो तथा काम क्रोध शत्रुओं को नष्ट करो ॥१५॥ पढ़े, लिखे, धनी यश-वान, मुझको और सब मनुष्यों को बनाओ रूप दो जय दो यश दो काम क्रोध तथा शत्रुओं को नष्ट करो ॥१६॥ हे प्रबल दैत्य के घमण्ड को तोड़ने वाली चण्डिके मुझ प्रणत को रूप



प्रणताय मे ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१७॥ चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१८॥ कृष्णेनसंस्तुते देवि शश्वद्भक्त्या सदाम्बिके ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १९ ॥ हिमाचलसुतानाथसंस्तुते परमेश्वरि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥२०॥ इन्द्राणी पतिसद्भावपूजिते परमेश्वरि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि॥२१॥देवि प्रचण्डदोर्दण्डदैत्य-दर्पविनाशिनि ॥ रूपं देहि जयं देहि यशो देहि द्विषो

---

दो जय दो यश दो तथा काम क्रोध शत्रुओं को नष्ट करो ॥१७॥ हे चार भुजी हे ब्रह्मा से स्तुति की गई परमेश्वरि ! रूप को दो जय दो यश दो तथा काम क्रोध शत्रुओं को नष्ट करो ॥१८॥ सदा श्रीकृष्णजी महाराज से स्तुति की गई हे अम्बिके ! देवी रूप दो जय दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥१९॥ शिवजी से पूजित हे परमेश्वरि ! तुम मुझको रूप दो, जय दो, यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥ २०॥ इन्द्र की स्त्री से पता प्राप्त करने के लिए पूजित हे पर-मेश्वरि ! रूप दो जय को दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥२१॥ हे बड़ी-बड़ी भुजा वाले दैत्यों का घमण्ड तोड़ने वाली देवि ! रूप दो जय को दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥२२॥ हे पूर्ण रूप से भक्ति करने



जहि।२२। देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥२३॥
पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ॥
तारिणीं दुर्गसंसारसागरस्यकुलोद्भवाम् ॥ २४ ॥
इदंस्तोत्रं पठित्वातु महास्तोत्रं पठेन्नरः ॥ स तु सप्त-
शतीसंख्यावरमाप्नोति सम्पदं ॐ ॥ २५ ॥ इति
मार्कण्डेयपुराणे अर्गलास्तोत्रं समाप्तम् ॥

---

वाले भक्तों को मोक्ष देने वाली अम्बिके ! देवि ! रूप दो जय को दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥२३॥ मन को रमण करने वाली मनकी इच्छानुसार रहने वाली कठिनता से तरने लायक संसार सागर को तराने वाली कुलोत्पन्न पत्नी को दो रूप दो जय दो यश दो और काम क्रोध शत्रुओं को नष्ट करो ॥२४॥ इस स्तोत्र को पढ़कर जो मनुष्य महा स्तोत्र पढ़ता है, तो वह सप्तशती के पाठ के फल के समान फल पाता है संपत्ति भी पाता है ॥२५॥

# अथ कीलकम् ॥

ॐ अस्य श्री कीलक मन्त्रस्य शिव ऋषिः अनुष्टुप् छन्दः श्री महासरस्वती देवता श्री जगदम्बा प्रीयर्त्थं सप्तशती पाठांगे जपे विनियोगः

ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

ॐ विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ॥ श्रेयः प्राप्ति निमित्ताय नमः सोमार्द्धधारिणे ॥१॥ सर्व-मेतद्विजानीयान्मन्त्राणामपि कीलकम् ॥ सोऽपि क्षेममवाप्नोति सततं जाप्यतत्परः ॥२॥ सिध्यन्त्यु-च्चाटनादीनि वस्तूनि सकलान्यपि ॥ एतेन स्तुवतां देवी स्तोत्रमात्रेणसिध्यति ॥ ३ ॥ न मन्त्रो नौषधं तत्र न किञ्चिदपि विद्यते ॥ विना जाप्येन सिध्येत

---

श्री देवीजी के लिये नमस्कार ॥ मार्कण्डेय ऋषि बोले ॥

श्री अर्द्ध चन्द्र धारी निर्मलज्ञान रूप देह वाले वेद त्रय रूप दिव्य तीन नेत्र वाले कल्याण की प्राप्ती के लिये शिवजी को नमस्कार है ॥१॥ मन्त्रों का शाप उत्कीलन आदि इन सबको जानकर, सदा जप करने वाला सप्तशती के पाठ बिना भी कल्याण को पाता है ॥२॥ इस प्रकार सप्तशती का पाठ व जप करने वाले को उच्चाटन आदि सब वस्तु सिद्ध होती हैं इस स्तोत्र मात्र से स्तुति करने पर भगवती सिद्ध होती है ॥३॥ इस पुरुष को कोई भी मन्त्र और औषधि कार्य सिद्धि के लिये



सर्वमुच्चाटनादिकम् ॥४॥ समग्राण्यपि सिध्यन्ति लोकशङ्कामिमां हरः ॥ कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम् ॥५॥ स्तोत्रं वै चण्डिकायास्तु तच्च गुप्तश्चकार सः ॥ समाप्नोति सुपुण्येन तां यथावन्नियन्त्रणाम् ॥६॥ सोऽपिक्षेम मवाप्नोति सर्वमेवन संशयः ॥ कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥ ७ ॥ ददातिप्रतिगृह्णाति नान्यथैषाप्रसिध्यति । इत्थंरूपेण कीलेन महादेवेन

---

उपयुक्त है । जपके बिना ही इस स्तोत्र ( उत्कीलन ) से उच्चाटन आदि सिद्ध होते हैं ॥ ४ ॥ सब उच्चाटन मोहन आदि इससे सिद्ध होते हैं वा नहीं यह शंका करके पहले शिवजी ने इस कल्याणकारी शुभ उत्कीलन को सब ऋषियों से बुलाकर कहा ॥ ५ ॥ इसके बाद चण्डिका जी के स्तोत्र को गुप्त कर दिया । इस स्तोत्र के पाठ करने से जो पुण्य मिलता है उसकी समाप्ति नहीं है इसलिये पहले की उस संकोच शीलता को छोड़ दो और मन्त्रों का जप करने वाला भी सब ही कल्याणों को पाता है इसमें संशय नहीं है ॥ ७ ॥ कृष्णचतुर्दशी अथवा शुक्लाष्टमी समाहित एकाग्र होकर सब वस्तु भेट में देता है पीछे संसार यात्रार्थ प्रसादरूप ग्रहण करता है ।* उससे देवीजी

---

*नोट देखो १७१ पृष्ठ में उत्कीलन तथा शापोद्धार ।

कवच से शरीर की रक्षा होती है । अर्गला लोहे की व काष्ट की होती है जिसके लगाने से किवाड़ नहीं खुलते यही फल इसके पाठ से होता है अर्थात् कोई प्रकारकी बाधा घरमें नहीं आसकती । और कीलन से उत्कीलन होता है अतः इनका पाठ अवश्य करना चाहिये ।

कीलितम् ॥८॥ यो निष्कीलां विधायैनां नित्यं जपति संस्फुटम् । ससिद्धः सगणः सोऽपि गन्धर्वो जायते नरः ॥६॥ न चैवाप्यटतस्तस्य भयं क्वापीह जायते ॥ नापमृत्युवशं यातिमृतो मोक्षमवाप्नुयात् ॥१०॥ज्ञात्वा प्रारभ्य कुर्वीत न कुर्वाणो विनश्यति । ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः ॥११॥ सौभाग्यादि च यत्किञ्चिद् दृश्यते ललनाजने ॥ तत्सर्वं त्वत्प्रसादेन तेन जाप्यमिदं शुभम् ॥१२॥ शनैस्तु जप्यमानेऽस्मिन् स्तोत्रे सम्पत्तिरुच्चकैः ॥ भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥ १३ ॥ ऐश्वर्यं

---

प्रसन्न होती हैं । दूसरी तरह नहीं । इस प्रकार महादेवजी ने सिद्धी रोकने को यही कीलन किया है ॥ ८ ॥ जो इसको निष्कीलन करके नित्य जपता है वह सिद्ध होता है वा गण होता है । अथवा गन्धर्व हो जाता है ॥ ६ ॥ उस जप करने वाले को कहीं भी घूमने से भय नहीं लगता। न अल्पायु होता तथा मरने पर मोक्ष होजाती है ॥१०॥ विधि जान करके प्रारम्भ करे विधि को विना जाने प्रारम्भ करने से नष्ट होजाता है। इसलिये इस संपूर्ण स्तोत्र को जान करके ही विद्वान् करते हैं ॥ ११ ॥ सौभाग्यादिक जो स्त्रियों में दिखाई देते हैं । वह सब इसके प्रसाद से हैं इसलिये यह जप करने योग्य है ॥ १२॥ इस स्तोत्र को धीरे २ जपने से संपत्ति होती है । जोर से पाठ करने से सम्पूर्ण संपत्ति प्राप्ति होती है इसलिये जोर से



यत्प्रसादेन सौभाग्यारोग्यसम्पदः॥ शत्रुहानिः परो-
मोक्षः स्तूयते सा न किं जनैः ॐ ॥ १४ ॥ इति
भगवत्याः कीलक स्तोत्रं समाप्तं शुभम्भूयात् ॥३॥

---

प्रारम्भ करते हैं जिसके प्रसाद से सौभाग्यादिक संपत्ति मिलती हैं। शत्रु नष्ट होते हैं मोक्ष प्राप्त होती है। फिर भी मन्दभागी जन इसकी स्तुति क्यों नहीं करते ?

इति श्री पं० घनश्याम गोस्वामी कृत कीलक भाषा समाप्त ॥

# अथ नवार्ण विधिः

श्रीगणपतिर्जयति ॥ ॐ अस्य श्रीनवार्ण-मन्त्रस्य ब्रह्मविष्णुरुद्राऋषयः गायत्र्युष्णिगनुष्टु-पछन्दांसि श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः नन्दा शाकम्भरी भीमाः शक्तयः रक्तदन्तिका दुर्गा भ्रामर्यो बीजानि अग्निवायुसूर्यास्तत्वानि ऋग्यजुःसामवेदाःध्यानानि श्रीमहाकालीमहालक्ष्मी महासरस्वतीप्रीत्यर्थं जपेविनियोगः।

ऋष्यादिन्यासः ॥

ॐ ब्रह्मविष्णुरुद्र ऋषिभ्यो नमः शिरसि ॥ ओं गायत्र्युष्णिगनुष्टुपछन्दोभ्यो नमो मुखे ॥ ओं महाकाली महालक्ष्मी महासरस्वती देवताभ्यो नमः हृदि ॥ ओं नन्दाशाकम्भरी भीमाः शक्तिभ्यो नमो

दक्षिणस्तने ॥ ॐ रक्तदन्तिका दुर्गाभ्रामरी बीजेभ्योनमोवामस्तने ॥ ॐ अग्निवायुसूर्यतत्वेभ्यो नमो नाभौ ॥ इति ऋष्यादि न्यासः ॥ अथवा तन्त्रान्तरे॥ (ऐंबीजम् ह्रींशक्तिः क्लीं कीलकम् ॥ ॐ ऐं बीजाय नमो गुह्ये ॥ ॐ ह्रींशक्त्ये नमः पादयोः ॥ ॐ क्लीं कीलकाय नमो नाभौ ॥ इति पाठान्तरम्) ॥ मूलेन करौ संशोध्य ॥ मन्त्र महोदधौ १८ तरंगे १११ श्लोकतः ॥ नवार्ण एकादश न्यास प्रकारः तत्रादौ शुद्ध मातृका न्यासः प्रथमः ॥ पृष्ठ ११६ के अनुसार करना ॥

कृतेनयेन देवस्य सारूप्यं याति मानवः ॥

इस प्रथम न्यास के करने से मनुष्य देवी रूप को प्राप्त होता है।

सारस्वत न्यासः ॥ २ ॥

अस्मिन्सारस्वते न्यासेकृते जाड्यं विनश्यति ॥

दूसरे सारस्वत न्यास के करने से मूर्खता नाश होती है।

ॐ ऐं ह्रीं क्लीं नमः कनिष्ठयोः ॥ ॐ ऐं ह्रीं क्लीं नमः अनामिकयोः ॥ ॐ ऐं ह्रीं क्लीं नमः मध्यमयो. ॥ ॐ ऐं ह्रीं क्लीं नमः तर्जन्योः ॥ ॐ ऐं ह्रीं क्लीं नमः अंगुष्ठयोः ॥ ॐ ऐं ह्रीं क्लीं नमः करतलयोः ॥ ॐ ऐं ह्रीं क्लीं नमः करपृष्ठयोः ॥ ॐ ऐं ह्रीं क्लीं नमः मणिबन्धयोः ॥ ॐ ऐं ह्रीं क्लीं नमः कर्पूरयोः ॥

ऊँ ऐं ह्रीं क्लीं नमः हृदये: ।। ऊँ ऐं ह्रीं क्लीं नमः शिरसि ।। ऊँ ऐं ह्रीं क्लीं नमः शिखायाम् ।। ऊँ ऐं ह्रीं क्लीं नमः कवचे ।। ऊँ ऐं ह्रीं क्लीं नमः नेत्रयोः ।। ऊँ ऐं ह्रीं क्लीं नमः अस्त्रायफट् ।। ऊँ ऐं ह्रीं क्लीं नमः पूर्वस्याम् ।। ऊँ ऐं ह्रीं क्लीं नमः आग्नेय्यां ।। ऊँ ऐं ह्रीं क्लीं नमः याम्याम् ।। ऊँ ऐं ह्रीं क्लीं नमः नैर्ऋत्ये ।। ऊँ ऐं ह्री क्लीं नमः पश्चिमायां ।। ऊँ ऐं ह्रीं क्लीं नमः वायव्याम् ।। ऊँ ऐं ह्रीं क्लीं नमः उत्तरे ।। ऊँ ऐं ह्रीं क्लीं नम ऐशान्यां ।। ऊँ ऐं ह्रीं क्लीं नम ऊर्ध्वा ।। ऊँ ऐं ह्रीं क्लीं नमः अधः ।। इति द्वितीय सारस्वत न्यासः ।।

अथ तृतीय मातृका गण न्यासः ।।

तृतीयेऽस्मिन्कृते न्यासे त्रैलोक्यविजयी भवेत् ।।

इस तीसरे न्यास के करने से मनुष्य त्रिलोकी को जीतता है ।।

ॐ ह्रीं ब्राह्मी पूर्वतः मां पातु ।। ॐ ह्रीं माहेश्वरी आग्नेय्यां मां पातु ।। ॐ ह्रीं कौमारी दक्षिणस्याम् मां पातु ।। ॐ ह्रीं वैष्णवी नैर्ऋत्याम् मां पातु ।। ॐ ह्रीं वाराही पश्चिमायाम् मां पातु ।। ॐ ह्रीं नारसिंही वायव्याम् मां पातु ।। ॐ ह्रीं इन्द्राणी उत्तरस्यां मां पातु ।। ॐ ह्रीं चामुण्डा ईशान्याम् मां पातु ।। ॐ ह्रीं व्योमेश्वरी ऊर्ध्वं मां पातु ।।

ॐ ह्रों सप्तेश्वरी पाताले मां पातु ॥ इति तृतीय न्यासः ॥

अथ चतुर्थः षड्देवी न्यासः ॥

तुर्यं न्यासं नरः कुर्याज्जरा मृत्युं व्यपोहति ॥
चौथे न्यास के करने से मनुष्य वृद्धावस्था तथा मृत्यु को दूर करता है ॥

ॐ कमलाङ्कुशमण्डिता तन्दजा पूर्वाङ्गं मे पातु ॥ ॐ खड्गपात्र करा रक्तदन्तिका दक्षिणाङ्गं मे पातु ॥ ॐ पुष्पपल्लव संयुताशाकम्भरी पृष्ठांङ्गं मे पातु ॥ ॐ धनुर्बाणकरा दुर्गार्तिहारिणी दुर्गा वामांगं मे पातु ॥ ॐ शिरः पात्रकरा भीमा मस्तकाच्चरणान्तं मे पातु ॥ चित्रकान्ति भृद्भ्रामरी चरणाभ्यां शिरः पर्यन्तं मे पातु ॥ इति चतुर्थ न्यासः ॥

अथ ब्रह्माख्य नामक पंचम न्यासः ॥

कृतेस्मिन्पञ्चमे न्यासे सर्वान्कामानवाप्नुयात् ॥
इस पञ्चम न्यास के करने से मनुष्य सब कामना को प्राप्त होता है ॥

ॐ ब्रह्मा सनातनः पादादि नाभि पर्यन्तं मां पातु ॥ ॐ जनार्दनः नाभेर्विशुद्धि पर्यन्तं नित्यं मां पातु ॥ ॐ रुद्रस्त्रिलोचनः विशुद्धेर्ब्रह्मरंध्रान्तं मां पातु ॥ ॐ हं सः पादद्वयं मे पातु ॥ ॐ वैनतेयः कर द्वयं मे पातु॥ ॐ वृषभश्चक्षुषी मे पातु॥ ॐ गजाननः सर्वाङ्गानि मे पातु ॥ ॐ सर्वानन्दमयो हरिः परापरौ देह भागौ मे पातु ॥ इति पञ्चमो ब्रह्मादि न्यासः ॥



अथ महालक्ष्म्यादि षष्ठन्यासः ॥

इस छठे न्यास के करने से मनुष्य सद्गति को प्राप्त होता है ॥

ॐ अष्टादशभुजायुक्तमहालक्ष्मीर्मध्ये मे पातु ॥ ॐ अष्टभुजायुक्त सरस्वती ऊर्ध्वं मे पातु ॥ ॐ दश-भुजा मण्डिता महाकाली अधः मे पातु ॥ ॐ सिंहः हस्तद्वयंमेपातु ॥ ॐ परहंसोक्षियुग्मम् मे पातु ॥ ॐ दिव्यमहिषारूढोयमः पदद्वयंमेपातु ॥ ॐ महेश-श्चण्डिकासहितः सर्वाङ्गानिमेपातु । इतिषष्ठन्यासः।

अथ सप्तम बीजमन्त्र न्यासः ॥

विन्यसेत् सप्तमेन्यासे कृते रोगक्षयो भवेत् ॥

इस सप्तम न्यास के करने से मनुष्य का रोग नाश होगा ॥

ॐ ऐं नमः शिखायाम् ॥ ॐ ह्रीं नमः दक्ष-नेत्रे ॥ ॐ क्लीं नमः वामनेत्रे ॥ ॐ चां नमः दक्ष-कर्णे ॥ ॐ मुं नमः वामकर्णे ॥ ॐ डां नमः दक्ष-नासापुटे ॥ ॐ यैं नमः वाम नासापुटे ॥ ॐ विं नमः मुखे ॥ ॐ च्चें नमः गुदे ॥ इति बीजन्यासः सप्तमः ॥

अथाष्टम विलोम बीजन्यासः ॥

कृतेस्मिन्नष्टमे न्यासे सर्वं दुःखं विनश्यति ॥

इस अष्टम न्यास के करने से सब दुःख नाश होगा ॥

ॐ च्चें नमः गुदे ॥ ॐ विं नमः मुखे ॥ ॐ यैं नमः वाम नासापुटे ॥ ॐ डां नमः दक्ष-



नासापुटे ॥ ॐ मुं नमः वाम कर्णे ॥ ॐ चां नमः दक्ष कर्णे ॥ ॐ क्लीं नमः वाम नेत्रे ॥ ॐ ह्रीं नमः दक्ष नेत्रे ॥ ॐ ऐं नमः शिखायाम् ॥ इति अष्टम न्यासः ॥

कुर्वीत नवमं न्यासं मन्त्र व्याप्ति स्वरूपकम् ॥

इस नवम न्यास करने से देवत्व प्राप्त होता है ॥

ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे नमः मस्तकाच्चरणपर्यन्तं पूर्वाङ्गे ॥ ॐ मूलं ६ नमः मस्तकाच्चरणा वधि दक्षिणाङ्गे ॥ ॐ मूलं ६ नमः मस्तकाच्चरणा वधि पृष्ठे ॥ ॐ मूलं ६ नमः मस्तकाच्चरणावधि वामाङ्गे ॥ ॐ मूलं ६ नमः मस्तकात्पादान्तम् ॥ ॐ मूलं ६ नमः पादादि शिरोन्तम् इति नवमोन्यासः ॥

अथ दशम षडङ्ग न्यासः

कृतेस्मिन्दशमे न्यासे त्रैलोक्यं वशगं भवेत् ॥

इस दशम न्यास करने से तीन लोक वश होते हैं ॥

ॐ ऐं ह्रीं क्लीं चामुण्डायैविच्चे नमः हृदयाय नमः ॥ ॐ मूलं ६ नमः शिरसे स्वाहा ॥ ॐ मूलं ६ नमः शिखायैवषट् ॥ ॐ मूलं ६ नमः कवचाय हुम् ॥ ॐ मूलं ६ नमः नेत्रत्रयाय वौषट् ॥ ॐ मूलं ६ नमः अस्त्राय फट् ॥दशमषडंग न्यासः॥



अथ एकादशन्यासः ॥

ॐ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥ शंखिनी चापिनी बाण भुशुण्डी परिघायुधा ॥१॥ सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ॥ परापराणां परमात्वमेव परमेश्वरी ॥ २ ॥ यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ॥ तस्य सर्वस्य या शक्तिः सात्वं किं स्तूयसे तदा॥३॥ यया त्वयाजगत्स्रष्टा जगत्पातात्तियो जगत् ॥ सोपि निद्रा-वशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ ४ ॥ विष्णुः शरीर ग्रहणमहमीशान एव च ॥ कारितास्ते यतो-ऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥५॥

आद्यं ऐं बीजं कृष्णतरंन्यात्वा सर्वांगे विन्यसामि ॥

पहले ऐं बीज को श्याम रंग का सब शरीर में ध्यान करना ॥

ॐ शूलेनपाहिनोदेवि पाहि खड्गेन चाम्बिके ॥ घंटा स्वनेन नः पाहि चापज्यानिः स्वनेन च ॥१॥ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥ भ्रामेणनात्मशूलस्य उत्तरस्यां तथेश्वरि ! ॥२॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्तिते ॥ यानिचात्यर्थ घोराणितैरक्षास्मांस्तथा भुवम् ॥३॥ खड्ग शूल गदादीनि यानि चास्त्राणि तेम्बिके ॥ करपल्लव संगीनि तैरस्मान्रक्षसर्वतः ॥४॥



द्वितीयं ह्रीं बीजं सूर्य सदृशं ध्यात्वा सर्व ( पृष्ठ ) वोन्यसेत् ॥

दूसरे ह्रीं को सूर्य समान सब शरीर में ध्यान करना ॥

ॐ सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते ॥ भयेभ्यस्त्राहिनो देवि दुर्गे ! देवि नमोस्तुते ॥१॥ एतत्तेवदनं सौम्यं लोचनत्रय भूषितम् ॥ पातुनः सर्व भूतेभ्यः कात्यायनि ! नमोस्तुते ॥२॥ज्वालाकरालम-त्युग्रमशेषासुरसूदनम्॥ त्रिशूलंपातुनोभीतेर्भद्रकाली नमोस्तुते ॥३॥ हिनस्तिदैत्यतेजांसि स्वनेनापूर्यया-जगत् ॥ सा घण्टा पातुनो देवि ! पापेभ्यो नः सुता-निव॥४॥ असुरासृग्वसा पंकचर्चितस्ते करोज्वलः॥ शुभाय खड्गो भवतु चण्डिके ! त्वां नतावयम् ॥५॥

तृतीयं क्लीं बीजं स्फटिकाभं ध्यात्वासर्वांगे विन्यसेत् ॥

तीसरे क्लीं को चन्द्रमा समान सब शरीर में ध्यान करना ॥

मूलषडंगन्यासः

ॐ ऐं अंगुष्ठाभ्यां नमः ॥ ॐ ह्रीं तर्जनीभ्यां नमः ॥ ॐ क्लीं मध्यमाभ्यां नमः ॥ ॐ चामुण्डायै अनामिकाभ्यां नमः ॥ ॐ विच्चेकनिष्ठकाभ्यां नमः॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥ ॐ ऐं हृदयाय नमः॥ ॐ ह्रीं शिरसे स्वाहा ॥ ॐ क्लीं शिखायै वषट् ॥ ॐ चामुण्डायै कवचाय हुं ॥ ॐ विच्चे नेत्रत्रयायवौषट्॥ ॐ ऐं ह्रीं क्लीं चामुंडायैविच्चे अस्त्रायफट् ॥



## अथाक्षर न्यासः तन्त्रान्तरे

ॐ ऐं नमः शिरसि॥ ॐ ह्रीं नमः नेत्रयोः ॥ ॐ क्लीं नमः ललाटे ॥ चां नमः भ्रुवोः ॥ ॐ मुं नमः कर्णयोः ॥ ॐ डां नमः गण्डयोः ॥ ॐ यैं नमः मुखे ( वदने ) ॥ ॐ विं नमः दन्त-पंक्त्योः ॥ ॐ च्चें नमः जिह्वायां ॥ ॐ ऐं नमः स्कन्धयोः ॥ ॐ ह्रीं नमः गले ॥ ॐ क्लीं नमः भुजयोः ॥ ॐ चां नमः हृदि ॥ ॐ मुं नमः पार्श्वयोः ॥ ॐ डां नमः पृष्ठे ॥ ॐ यैं नमः नाभौ ॥ ॐ विं नमः लिंगे ॥ ॐ च्चें नमः कट्योः ॥ मू० ॐ ९ नमः गुह्ये ॥ मू० ॐ ९ नमः करयोः ॥ मू० ॐ ९ नमः पादयोः ॥ मू० ॐ ९ नमः सर्वांगे ॥

## अथ दिङ्न्यासः

ॐ ऐं प्राच्यैनमः ॥ ॐ ऐं आग्नेय्यै नमः ॥ ओं ह्रीं दक्षिणायै नमः ॥ ओं ह्रीं नैऋत्यै नमः ॥ ओं क्लीं प्रतीच्यै नमः ॥ ओं क्लीं वायव्यै नमः ॥ ओं चामुण्डायै उदीच्यै नमः ॥ ओं चामुण्डायै ईशान्यै नमः ॥ ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे ऊर्ध्वायै नमः ॥ ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे भूम्यै नमः ॥ मानसोपचारै संपूज्य ॥ तन्त्रान्तरोक्त अक्षमाला प्रकारः ।समानेनाक्षसूत्रस्य विधानमभिधीयते ॥ यथा लाभं यथा बुद्धि अक्षाण्यानीय यत्नतः ॥ अन्योन्य समरूपाणि नाति स्थूलकृशानि च ॥

अथ ध्यानम् ॥

शंखं चक्रं गदां बाणान्पाशं परिघ शूलके ॥
भुशुण्डों च शिरः खड्गं दधतीं दशवक्त्रकाम् ॥१
तामसीं सिद्धिदां नौमि महाकालीं दशांघ्रिकाम् ॥
मालां च परशुं बाणान् गदां कुलिश मेवच ॥ २
पद्मं धनुः कुण्डिकां च दंडं शक्तिमसिं तथा ॥
खेटकं जलजं घंटां सुरापात्रं च शूलकम् ॥३॥
पाशं सुदर्शनं चैव दधतीं लोहित प्रभाम् ॥
पद्मस्थितांमहालक्ष्मीं भजे महिषमर्दिनीम् ॥४॥
घण्टां शूलं हलं शंखं मुसलासि धनुः शरान् ॥
दधतीमुज्वलां नौमिदेवीं गौरी समुद्भवाम् ॥५॥

इन श्लोकों का अर्थ आगे १। २। ५ अध्याय में देखना

इति ध्यात्वा मालां सम्पूज्य प्रार्थयेत् ॥

ॐ मां माले महामाये सर्वशक्ति स्वरूपिणि !
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मां सिद्धिदा भव ॥

---

जन्तुभिर्न विशीर्णानि न जीर्णानि नवानि च ॥ गव्यैस्तु पञ्चभिस्तानि सम्प्रक्षाल्य पृथक् पृथक् ॥ अश्वत्थपत्रनवकैः पद्माकारेण कल्पयेत् ॥ सूत्रं मणींश्च गन्धाद्भिः क्षालितांस्तत्र निक्षिपेत् ॥ ※ तारंशक्तिं मातृकां च सूत्रेचैवमणिष्वथ ॥ विन्यस्य पूजयेदाज्यैर्जुहुयाच्चैव शक्तितः ॥ मणिमेकैकमादाय सूत्रे तत्र तु योजयेत् ॥ एवं कृताक्षमालायां जपेन्मातृकया ततः ॥ गुरुं सम्पूज्य तद्धस्तात् गृह्णीयात्सर्व सिद्धये ॥ शैवागमेतु ॥ गोपुच्छ'सदृशी कार्या एकास्त्रा वा समेरुका ॥ प्रोतव्या सितवर्णाद्यैस्तत्कर्मप्रसिद्धये ॥ जपमालांविधायैवंततःसंस्कारमारभेत् ॥ क्षालयेत्पञ्च-

इति मालां प्राथ्य ।। ह्रीं सिद्धयै नम इति मालांनत्वा ऐं ह्रीं क्लीं चामुण्डाये विच्चे ।। १०८ नवार्ण मन्त्रं जप्त्वा षडंगन्यासंकृत्वा रात्रि सूक्तं पठेत् ।।

नवार्ण के प्रयोग का फल १६५ पृष्ठ में देखिये ।।

---

गव्यैस्तां सद्यो[1]जातेन तज्जलैः । चन्दनागुरुगन्धाद्यैर्वाम[2]देवेनघर्षयेत् ।। धूपयेत्तामघोरेण[3]लिंपेत्तत्पुरुषेण[4]तु ।। मन्त्रयेत्पञ्चमे[5]नैव प्रत्येकं तु शतं-शतम् ।। मेरुञ्च पञ्चमेनैव तथा मन्त्रेण मन्त्रयेत् ।।

१ ॐ सद्योजातं प्रपद्यामि सद्योजाताय वैनमो नमः ।। भवे भवेनाति भवे भवस्व मांभवोद्भवाय नमः ।।

२ ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कल विकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूत दमनाय नमो मनोन्मनाय नमः ।।

३ ॐ अघोरेभ्योथघोरेभ्यो घोर घोरतरेभ्यः सर्वेभ्यः सर्व शर्वेभ्यो नमस्तेऽअस्तु रुद्रेभ्यः ।।

४ ॐ तत्पुरुषायविद्महे महादेवाय धीमहि ।। तन्नो रुद्रः प्रचोदयात् ।।

५ ॐ ईशानः सर्व विद्यानामीश्वरः सर्वभूतानाम् ।।
ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवो मे अस्तु सदा शिवोम् ।।

ॐ ह्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं लं क्षं नव अश्वत्थपत्रस्थापित मालां संविन्यस्य देवता प्राणप्रतिष्ठांकुर्यात् ।। प्राणप्रतिष्ठा २१ पृष्ठ में देखना ।।

जप करने के लिये माला विधान १६१ पृष्ठ में देखिये ।

माला प्रार्थना ।।

ॐ मां माले महामाये सर्वशक्ति स्वरूपिणि ।।
चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मे सिद्धिदा भव ।।
ॐ अविघ्नं कुरु माले त्वं गृह्णामिदक्षिणे करे ।।
जपकाले च सिद्ध्यर्थं प्रसीद मम सिद्धये ।।

ॐ अक्षमालाधिपतये सुसिद्धिं देहि २ सर्वमन्त्रार्थ साधिनि साधय २ सर्वसिद्धिं परिकल्पय २ मे स्वाहा ।।

इतिप्रार्थ्य ॥

ऐं ह्रीं अक्षमालिकायै नमः ॥ इति मंत्रेणमालांपूजयेत् ॥

विसर्जनम् ॥

ॐ त्वं माले सर्व देवानां प्रीतिदा शुभदा भव ॥ शिवं कुरुष्व मे भद्रे यशोवीर्यं च सर्वदा इति मालां शिरसि निधाय प्राणानायम्य न्यासं कृत्वा विसर्जयेत् ॥

मालायां जप प्रकारः शैवागमे ॥

मध्यमायां न्यसेन्मालां ज्येष्ठेनावर्तयेत्क्रमात् ॥ भुक्ति मुक्ति प्रदासेयं मातृकागणनक्रमः ॥ अंगुष्ठानामिकाभ्यान्तु कुर्यादुत्तम कर्मणि ॥ तर्जन्यंगुष्ठ योगाद्धि विद्वेषोच्चाटनेजपः ॥ कनिष्ठाङ्गुष्ठकाभ्यांतु जपेन्मारण कर्मणि ॥ जपान्यकाले तां मालां पूजयित्वा च गोपयेत् ॥ जीर्णे सूत्रे पुनः सूत्रं ग्रन्थयित्वा शतंजपेत् ॥ जपेन्निषिद्धसंस्पर्शेक्षालयित्वा यथोचितम् । कासे क्षुते च जृम्भायामेकमावर्तकं त्यजेत् ॥ प्रमादात्तर्जनी स्पर्शो भवेदावर्तकं त्यजेत् ॥ यदासंत्रुट्यते मालाग्रन्थयित्वाथ पूर्ववत् ॥ प्रतिष्ठितायां तस्यां तु मन्त्रं जप्यादन्यधीः ॥ एवं प्रतिष्ठितायांतु अन्येनैवजपेन्मनुम् ॥ अन्यत्रापि ॥ येन प्रतिष्ठिता माला तमेवतु मनुं जपेत् ॥ अन्य मन्त्रज वा विद्वानकार्याकर्हिचिद्बुधैः । तर्जन्या न स्पृशेत्सूत्रं कम्पयेन्नो विधूनयेत् ॥ नस्पृशेद्वामहस्तेन करभ्रष्टांनकारयेत् ॥ अङ्गाणां चालनेङ्गुष्ठ नान्यमक्षं न संस्पृशेत् ॥ जपकाले सदा विद्वान् मेरुं नैव विलंघयेत् ॥ परिवर्तन काले च शङ्कृं नैवकारयेत् ॥ एवं सर्व परिज्ञाय मालायां जपमारभेत ॥ नित्यंजप करे कुर्यान्नतु काम्यं कदाचन ॥ काम्यमपि करे कुर्यान्मालाभावे च सुन्दरि ! ॥

अथ शक्ति करमाला यामले ॥

अनामायास्त्रयं पर्व कनिष्ठायास्त्रिपर्विका ॥ मध्यमायास्त्रयंपर्वं तर्जनी मूलपर्वणि ॥ प्रादक्षिण्य क्रमेणैव जपेद्दशसुपर्वसु ॥ शक्तिमाला समाख्याता सर्वमन्त्र प्रदीपिका ॥ पर्वद्वयं तु तर्जन्या मेरुं तद्विद्धि पार्वति ! ॥ तर्जन्यग्रे तथा मध्ये यो जपेत्तत्र मानवः ॥ चत्वारितस्य नश्यन्ति आयुर्विद्यायशोबलम् ॥

इनसे जप की माला की संख्या निषेध ॥

नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न च पुष्पकैः ॥ न चन्दनैर्मृत्तिकया जप संख्यां न कारयेत् ॥ लाक्षां कुसीदं (लालचन्दन) सिन्दूरं गोमयञ्च करीषकम् ॥ विलोड्य गुटिकां कृत्वा जप संख्यान्तु कारयेत् ॥ शाक्तानन्द तरंगिण्यां ६ उल्ला से ॥

मणिमध्ये नागपाशं ब्रह्मग्रन्थि मथार्पयेत् ॥ हुँ मन्त्रेण ततोमेरुं प्रणवेन च बन्धयेत् । अन्यत्रापि जप प्रकारः ॥

अंगुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलंघने ॥ अक्षमालां गुरोर्लब्ध्वा तदभावे स्वनिर्मितान् ॥ गोपयेत्सर्वकर्मान्तं यदीच्छेत्सिद्धि मुत्तमाम् ॥ स्वमन्त्रमक्षसूत्रं च गुरोरपिनदर्शयेत् ॥ जपकालेचगोप्तव्यमक्षसूत्रं च षण्मुख ! ॥ परदृष्टिगतं सूत्रं सर्वथानिष्फलं भवेत ॥ तस्मात्सर्व प्रयत्नेन गोपनीयं सदा बुधैः ॥ असंख्यातेन ( तं च ) यज्जप्तं तज्जप्तं निष्फलं भवेत् ॥ अन्यत्र विशेषः ॥ मन्त्रतन्त्रप्रकाशे ॥ अंगुलिभिरंगुलिपर्वभिरपि जप उक्तः ॥ अंगुलि जप संख्याप्तं फलमेकगुणं स्मृतम् ॥ रेखास्वष्टगुणं विद्यादक्षैश्चशतसंगुणम् ॥ *गणनाविधि मुल्लंघ्य यो जपेत्तं जपंयतः ॥ गृह्णन्ति राक्षसानूनं गणयेत्सर्वथा बुधः ॥

मुण्डमाला तन्त्रे ॥

मुखे मुखन्तु संयोज्य पुच्छे पुच्छं तु योजयेत् ॥ तत्स्वजातीयमेकाक्षं मेरुत्वेनाग्रतोन्यसेत्॥ साद्धं द्वया वर्तनेन ग्रन्थिं कुर्यादधो दृढं ॥ ब्रह्मग्रन्थिं ततो दद्यान्नागपाशमथापि वा ॥ गो पुच्छ सदृशी कुर्यादथ सर्पाकृतिर्भवेत ॥ ग्रन्थिहीनं न कर्तव्यं मेरुपृष्ठेन दूष्यति ॥ अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः ॥ सर्वंतद्विफलं विद्यात्क्रुद्धा भवति चंडिका ॥ न धारयेत्करे कण्ठे मूर्न्द्धि च जपमालिकाम् ॥ भूत शुद्धौ ॥ अथ जप विधिः ॥ यस्य यस्य च मन्त्रस्य उद्दिष्टो याच देवता ॥ चिन्तयित्वा तदाकारं मनसा जपमाचरेत् ॥ शनैः शनैरविस्पष्टं न द्रुतं न विलम्बितम ॥ क्रमेणोच्चारयेद्वर्णानाद्यन्त क्रम योगतः ॥ अति ह्रस्वो व्याधि हेतुरति दीर्घो वसु क्षयः ॥ अक्षराक्षर संयुक्तं जपेन्मौक्तिक हारवत् ॥ कुलार्णवे ॥ तन्निष्ठस्तद् गत प्राणस्तच्चिन्तस्तत्परायणः ॥ तत्पदार्थानुसन्धानं कुर्वन्मन्त्र जपेत्प्रिये !

---

टि० *जो जप किया जाय उसकी गिनती अवश्य करनी चाहिये। और जो बिना गिनती के जप किया जाता है उसका फल राक्षस ले लेते हैं।



## ॥ अथ रात्रिसूक्तम् ॥

ॐ विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ॥
निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥१॥

ब्रह्मोवाच ॥

त्वं स्वाहा त्वं स्वधा त्वंहि वषट्कारः स्वरात्मिका ॥
सुधात्वमक्षरेनित्येत्रिधामात्रात्मिका स्थिता ॥ २ ॥
अर्धं मात्रास्थितानित्यायानुच्चार्या विशेषतः ॥ त्वमेव
सा त्वं सावित्री त्वं देविजननी परा ॥३॥ त्वयैतद्धा-
र्यते विश्वं त्वयैतत्सृज्यते जगत् ॥ त्वयैतत्पाल्यते
देवि त्वमत्स्यन्तेचसर्वदा ॥४॥ विसृष्टौ सृष्टिरूपात्वं
स्थितिरूपाचपालने ॥ तथा संहृतिरूपान्ते जगतो-
ऽस्य जगन्मये ॥५॥ महाविद्या महामाया महामेधा

---

आसनानि तन्त्रे ॥

कौशेयं वाथ चैलं वा चार्मं तौलमथापि वा ॥ वेत्रजं तालपत्रं वा काम्बलं दार्भमासनम् ॥ वंशाश्म दारु धरणी तृण पल्लवनिर्मितम् ॥ वर्जयेदासनं मन्त्री दारिद्रय व्याधिदुःखदम् ॥ धर्मार्थ काम मोक्षाप्ते-श्चैलाजिन कुशोत्तरम् ॥ यतीनामासनं श्लक्ष्णं कूर्माकारं तु कारयेत् ॥ अन्येषां तु चतुः पादं चतुरस्रं तु कारयेत ॥ गोशकृन्मृण्मयंभिन्नं तथा पालाश पिप्पलम् ॥ लौहविद्धं सदैवार्कं वर्जयेदासनं बुधः ॥ स्वस्तिक पद्म वीरादिष्वेकासन समास्थितः ॥ जपार्चनादिक कुर्यादन्यथानिष्फलं भवेत् ॥ दानमाचमनं होमं भोजनं देवतार्चनम् ॥ प्रौढपादो नकुर्वीत स्वाध्यायं चैव तर्पणम् ॥ प्रौढपाद लक्षणम् ॥ आसनारूढ पादस्तु जानुनोर्वाथजंघयोः कृताबसिक्थ को यस्तु प्रौढ पादःऽस उच्यते ॥

महास्मृतिः ।। महामोहा च भवती महादेवी महासुरी ।।६।। प्रकृतिस्त्वं चसर्वस्य गुणत्रयबिभाविनी।।काल-रात्रिर्महारात्रिर्मोहरात्रिश्चदारुणा ।।७।। त्वं श्रीस्त्व-मीश्वरी त्वंह्रीस्त्वंबुद्धिर्बोधलक्षणा ।।लज्जापुष्टिस्तथा तुष्टिस्त्वंशान्तिः क्षान्तिरेव च ।। ८ ।। खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।। शंखिनी चापनी बाण भुशुण्डीपरिघायुधा ।। सौम्यासौम्य-तराशेषसौम्येभ्यस्त्वतिसुन्दरी ।। परापराणां परमा-त्वमेव परमेश्वरी ।।१०।। यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ।। तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ।।११।। यया त्वया जगत्स्रष्टा जगत्पात्य (ता) त्ति यो जगत् ।। सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ।।१२।। विष्णुः शरीर ग्रहणमहमीशान एव च ।। कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ।। १३ ।। सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ।। मोहयैतौ दुराधर्षा-वसुरौ मधुकैटभौ ।।१४।। प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ।। बोधश्च क्रियतामस्य हन्तु-मेतौ महासुरौ ।।१५।। इति रात्रिसूक्तम् ।।

रात्रिसूक्त का अर्थ १ अध्याय के ७० श्लोक से देखना ।।

ॐ अस्य श्रीप्रथममध्यमोत्तमचरित्राणांब्रह्मविष्णुमहे



श्वरा ऋषयः श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः गायत्र्युष्णिगनुष्टुपछन्दांसि नन्दाशाकम्भरीभीमाः शक्तयः रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि अग्निर्वायुस्सूर्यास्तत्वानि ऋग्यजुसामवेदाः ध्यानानि मम (यजमानस्य) सकलकामनासिद्धये श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवीनाम्प्रीत्यर्थे पाठे ( हवने ) विनियोगः ॥ तत्रादौ न्यासः ॥

ॐखड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा शंखिनी चापिनी बाण भुशुण्डी परिघायुधा ॥ अंगुष्ठाभ्यां नमः ॥ (हृदयाय नमः) ॥ ॐ शूलेन पाहिनो देवि पाहि खड्गेन चाम्बिके ॥ घण्टास्वनेन नः पाहि चापज्या निः स्वनेन च ॥ तर्जनीभ्यां नमः ॥ (शिरसे स्वाहा) ॥ॐप्राच्यां रक्षप्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥ भ्रामणेनात्मशूलस्यउत्तरस्यां तथेश्वरि ॥ मध्यमाभ्यां नमः ॥ (शिखायैवषट्) ॥ ॐसौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ॥ यानि चात्यन्त घोराणि तै रक्षास्मांस्तथाभुवम् ॥ अनामिकाभ्यां नमः॥(कवचायहुम्)॥ॐ खड्गशूलगदादीनि यानि चास्त्राणि तेम्बिके ॥ करपल्लव संगीनि तैरस्मान्रक्षसर्वतः ॥ कनिष्ठकाभ्यां नमः ॥ ( नेत्रत्रयायवौषट् ) ॥ॐ सर्वस्वरूपे सर्वेशेसर्वशक्ति


समन्विते ॥ भयेभ्यस्त्राहिनो देवि दुर्गेदेवि नमोस्तु ते ॥ करतल करपृष्ठाभ्यां नमः ॥ अस्त्रायफट्

## चण्डी पंचाक्षर न्यासः

ॐ ह्रीं हृदयायनमः ॥ ॐ चं शिरसे स्वाहा ॥ॐ डिं शिखायै वषट् ॥ॐ कां कवचाय हुम् ॥ॐ यैं नेत्र त्रयाय वौषट् ॥ ॐ ह्रीं चण्डिकायै अस्त्रायफट् ॥

## अथ चक्रन्यासः ॥

ॐ शम्भुतेजो ज्वल ज्वाला मालिनि पावके ह्रां नन्दायै अंगुष्ठाभ्यां नमः (हृदयायनमः) ॥ ॐ शम्भुतेजो ज्वल ज्वालामालिनि पावके ह्रीं रक्तदन्तिकायै तर्जनीभ्यां नमः ( शिरसेस्वाहा ) ॥ ॐ शम्भुतेजो ज्वल ज्वाला मालिनि पावके ह्रूं शाकम्भर्यै मध्यमाभ्यां नमः ( शिखायैवषट् ) ॥ ॐ शम्भुतेजो ज्वल ज्वालामालिनि पावके ह्रैं दुर्गायै अनामिकाभ्यां नमः (कवचायहुम्) ॥ ॐ शम्भुतेजो ज्वल ज्वाला मालिनि पावके ह्रौं भीमायै कनिष्ठकाभ्यां नमः ( नेत्रत्रयायवौषट् ) ॥ ॐ शम्भुतेजो ज्वलज्वाला मालिनि पावके ह्रः भ्रामर्यै करतल कर पृष्ठाभ्यां नमः ॥ ( अस्त्रायफट् ) एवं हृदयादि ॥



## अथ ध्यानम् ॥

*ॐ विद्युद्दाम समप्रभां मृगपति स्कन्धस्थितां-भीषणाम् ॥ कन्याभिः करवाल खेट विलसद्धस्ता-भिरासेविताम् ॥ हस्तैश्चक्रगदासिखेट विशिखां-श्चापं गुणं तर्जनीम् ॥ बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥१॥

इस ( जप ) ध्यान का अर्थ चित्र के अनुकूल है

इतिध्यात्वामानसोपचारैः सम्पूज्य गुरुदेवतात्मैक्यं विभाव्य पाठं ( जपं ) कुर्यात् ॥

गुरू देवता आत्मा का एक रूप ध्यान करता हुआ अर्थात् गुरु को ब्रह्म रंध्र में देवता को हृदय में कंठ से मंत्र का मध्यम स्वर से उच्चारण करता हुआ पाठ करे ।

१—अथ वक्ष्यमाण काम्यप्रयोगोपयोगी संपुट व्यवस्था ॥ यथा पार्वति प्रश्नः ॥ देव्युवाच ॥ संपुटं कतिधा स्वामिन् वेत्तुमिच्छामि तत्वतः कथयस्वसुरेशान ! यद्यहं तव वल्लभा ॥ १ ॥ ईश्वरोवाच ॥ संपुटं द्विविधं ज्ञेयमुदयास्तकरं प्रिये ! शृणुदयं त्वमत्रादौपश्चादस्तं वदामिते ॥ २ ॥ मंत्रमादौपुनः श्लोकमंतेमंत्रं पुनः पठेत् ॥ पुनर्मंत्रंपुनः श्लोकं क्रमोऽयमुदये शुभः ॥ ३ ॥ उदयोत्कर्ष लाभाय संपुटोयमुदाहृतः ॥ अत्र सर्वत्र श्लोकमंत्रोपलक्षकमिति ॥ अस्तं चिकित्सा शास्त्रेषु शरा-बाभ्यां कृतं भवेत् ॥ तत्तेहं संप्रवदाम्यत्र एकाग्रकृतमानसः ॥ ४ ॥ मंत्र-मादौ पुनः श्लोकमंते मंत्र विपर्ययं ॥ मारणोच्चाटनेबंधेसंपुटोयमुदा-हृतः ॥ प्रकारोयमनादृत्य कुर्वन्त्यात्म प्रकल्पितं ॥ रौरवादिषु पच्यन्ते यावदाभूतसंप्लवः ॥ इति मरीचिकल्पे ॥

---

* पाठान्तरम् शारदायां २१ पटले ४१ ॥

हेमाचल तटे रम्ये कल्पवृक्षोपशोभिते ॥ दिव्योद्यानं चिन्तयेच्च विशालं हेममूवलम् ॥ कृशानुरूपवप्रेण करालेन समावृतम् ॥ तन्मध्ये



## प्रथम अध्यायः

### ॐ अत्राद्य वर्तमान काले चंडी सप्तशती आद्य चरित्रस्य ब्रह्माऋषिः महाकाली देवता गायत्रीछन्दः

चण्डी पाठ के षट् संवाद हैं। जैसेः—

मेधाश्च कथयामास सुरथाय समाधये ॥ सा कथा कथिता पश्चान्मार्कण्डेयेन भागुरेः ॥ भामेरकथयामासुः पक्षिणो जैमिनिं प्रति ॥ अनेनैव विधानेन कथाः षड् विधिका मताः ॥

दुर्गा महात्म्य प्रथम महर्षि मेधा ने राजा सुरथ और समाधिवैश्य को सुनाई ॥ तदनन्तर वही कथा मृकण्डु के पुत्र चिरंजीव महर्षि मार्कण्डेय ने मुनिवर भागुरि ( कौष्टिक ) को सुनाई ॥ इस प्रकार वही कथा सर्व तत्वों के जानने वाले द्रोणपुत्र पक्षिगण ने महर्षि जैमिनि से कही। इसी तरह चण्डी भगवती की कथा ( षट् संवाद ) छै प्रकार से संसार में विख्यात हुई ॥ और वही कथा संवाद महर्षि वेदव्यासजी ने मार्कण्डेय पुराण में यथावत् क्रम से वर्णन कर लोकोपकार के लिये संसार में प्रचारित करी ॥

---

चिन्तयेद्दिव्यं विचित्रमणि मण्डपम् ॥ तस्मिन्सिंहासनेम्भोज कर्णिकायां विचिन्तयेत् ॥ दंष्ट्राकरालाट्टहासं कृष्ण वर्णं भयानकम् ॥ अतितीव्रमुखं सिंहं ज्वलदग्निशिखोपमम् ॥ तस्यो परिष्टात्तां देवीं कोटिबालार्क सन्निभाम् ॥ चक्रासिबाणशूलाख्यान् दधतीन्दक्षिणैर्भुजैः ॥ शंखचक्रधनुर्बाण तर्जनीश्चाम बाहुभिः ॥ चन्द्रखण्डसमायुक्तामतिभीमत्रिलोचनाम् ॥ ऊर्ध्व ज्वलत्कशपाश्यामट्टहासाट्टहासोन्मुखीम् ॥ अङ्गाद्यावृत्ति संयुक्तामस्त्रशस्त्रपरीवृताम् ॥ इन्द्रादि लोक पालैश्च सेवितां विन्ध्यवासिनीम् ॥

### देवी के वाहन सिंह के शरीर में देवताओं का वास

ग्रीवायां मधुसूदनोस्य शिरसि श्री नीलकंठः स्थितः ॥ श्रीदेवी गिरिजा ललाट फलके वक्षःस्थले शारदा ॥ षड्वक्त्रो मणि बन्ध सन्धिषु

नन्दजा शक्तिः रक्तदन्तिका वीजं अग्निस्तत्त्वं ऋग्वेद स्वरूपं श्रीमहाकालीप्रसादात् आत्मनोऽभीष्टफल प्राप्ति हेतवे धर्म्मार्थ काम मोक्षार्थे प्रथम चरित्र पाठे (हवने) विनियोगः ॥

---

॥ सप्तशती पाठ प्रसंग ॥

पूर्व काल में व्यासजी के शिष्य जैमिनि मुनि साङ्ग वेद-शास्त्र पार गामी हुए ॥ वे महाभारत के किसी किसी स्थान में संदिग्ध हुए परन्तु वेदव्यासी से संदेह निवारण करने का समय नहीं प्राप्त हुआ ॥ तब महर्षि मार्कण्डेय के समीप जिज्ञासुरूप में संशय दूर करने गये ॥ जैमिनि बोले--हे भगवन् साक्षात् नारायण क्या मनुष्य योनि में जन्मे हैं ? क्या पांचौ पांडवों की एक मात्र स्त्री द्रौपदी है ? क्या बलराम तीर्थ यात्रा

---

तथा नागास्तु पार्श्वस्थिताः ॥ कर्णोयस्य तु चाश्विनौ स भगवान्सिंहो ममास्त्विष्टदः ॥१॥ यन्नेत्रे शशि भास्करौ वसु कुलं दन्तेषु यस्यस्थितं ॥ जिह्वायां वरुणस्य हुँकृतिरिमं श्रीचर्चिका चण्डिका ॥ गण्डौ यक्ष यमौ तथोष्ठ युगुलं संध्याद्वयं पृष्ठके ॥ वक्षोयस्य विराजते सभगवासिंहोंममा-स्त्विष्टदः ॥२॥ ग्रीवा संधिषु सप्तविंशति मितान्यृक्षाणि साध्या हृदि ॥ प्रौढानिर्घृणता तमोस्य तु महा क्रौर्यैः समापूतनाः ॥ प्राणेयस्य तु मातरः पितृ कुलं यस्यास्त्य पानात्मकं ॥ रूपे श्रीकमला कचेषु विमलास्तेस्यूरवे रश्मयः ॥३॥ मेरुः स्यादुवृषणेऽधयस्तु जनने स्वेदस्थिता निम्नगा ॥ लाङ्गूले सहदैवतैर्विलसिता वेदाबलं वीर्यकम् ॥ श्री विष्णोःसकला सुरा अपि यथास्थानं स्थिता यस्यतु ॥ श्री सिंहोऽखिल देवता मयवपुर्देवी प्रियः पातुमाम् ॥४॥ यो वालग्रह पूतनादिमयहृद्यः पुत्र लक्ष्मी प्रदो यः स्वप्नज्वर रोग राजभयहृद्योऽमंगलेमंगलः ॥ सर्वत्रोत्तम वर्णनेषु कविभिर्य-स्योपमादीयते ॥ देव्यावाहनमेषरोगभय हृत्सिंहोममास्त्विष्टदः ॥ ५ ॥

इति देवी पुराणोक्त देवी वाहन सिंह ध्यानम् ॥



## अथ माहात्म्य न्यासः ॥

ॐ मधुकटैभ बध माहात्म्याय नमः ब्रह्मरन्ध्रे ॥ ॐ महिषासुर सैन्य बध माहात्म्याय नमः सीमन्ते ॥ ॐ महिषासुर बध साहात्म्याय नमः भ्रूमध्ये ॥ ॐ शक्रादि माहात्म्याय नमः नेत्रयोः ॥ ॐ देव्या दूत संवाद माहात्म्याय नमः मुखे ॥ ॐ धूम्रलोचन बध माहात्म्याय नमः कर्णयो ! ॥ ॐ चण्ड मुण्ड बध माहात्म्याय नमः हृदि ॥ ॐ रक्त बीज बध माहात्म्याय नमः नाभौ ॥ ॐ निशुम्भ बध माहात्म्याय नमः लिङ्गे ॥ ॐ शुम्भ बध माहात्म्याय नमः मूलाधारे ॥ ॐ स्तुति माहात्म्याय नमः जान्वोः ॥ ॐ फल माहात्म्याय नमः गुल्फयोः ॥ ॐ वरदान माहात्म्याय नमः पादयोः ॥

---

प्रसङ्ग में ब्रह्महत्या का प्रायश्चित्त करने गये ? क्या कृष्ण भगवान् ने द्रौपदी के पाँच पुत्रों को अनाथ की तरह बिना विवाह हुए ही मरवा दिया ? मेरा यही सन्देह है आप उत्तर दे समाधान करें। जैमिनि मुनि के प्रश्नोपरान्त मार्कण्डेय मुनि ने कहा—यह समय इन सब कथा के कहने का नहीं है अतएव तुम इन सब प्रश्नों को सम्पूर्ण शास्त्रों के धुरन्धर ज्ञाता जातिस्मर और पितृशाप ग्रस्त विन्ध्याचल वासी पिङ्गाक्ष्य, विराध, सुपुत्र और सुमुख नामक मुनि के पुत्र चार पक्षियों से जिज्ञासा करो । जिसके द्वारा तुम्हारे



अनन्तर

ह्रीं माया बीज से सप्त बार व्यापक न्यास करना ॥

अथ महाकाली ध्यानम् ॥

ॐ भीमां भीमोग्रदंष्ट्राञ्जनगिरि विलसत्तुल्य-कान्तिं दशास्यां त्रिंशल्लोलाक्षिमालां दश लुलित-भुजां पंक्ति पादांस्तथैव ॥ शूलं वाणं गदां वै धनुरथ-दधतीं शंख चक्रे भुशुंडीं वन्दे कालीं कराग्रैः परि-घमसि युतंतामसीं शार्षकञ्च ॥ इति ध्यात्वा ॥

---

समस्त सन्देह का नाश हो जायगा । यह सुन जैमिनि विंध्या चल गये और पाषाण शिला के खण्ड पर बैठ यथोचित कुशल क्षेमोपरान्त जिज्ञासु रूप में प्रश्न कहने लगे ॥ इसके बाद चारों पक्षियों ने क्रमपूर्वक सब प्रश्नों का उत्तर मार्कण्डेय क्रौष्टिक ( भागुरि ) उपक्रम द्वारा दिया ॥ इसी तरह क्रमपूर्वक चौदह मन्वन्तरों के प्रसंग में सुरथ राजा जैसे देवी के प्रसाद से अष्टममन्वन्तराधिपति हुए ( यही सुरथ स्वारोचिष नामक दूसरेमनु के अधिकार काल में द्वितीयमनुपुत्र चैत्रनामक क्षत्री राजा के वंश में इन्हीं मेधस ऋषि के उपदेश से भगवती की उपासना द्वारा वर प्राप्त किया था ) यह सूर्य की सवर्णा नाम की स्त्री के गर्भ से उत्पन्न होकर भविष्य में अष्टम मनुके नाम से विख्यात हुए ॥ सूर्य की छाया नाम की स्त्री के गर्भ से वैवस्वत नामक सप्तम मनुका जन्म हुआ सब मनुवंशी राजा सूर्य के वंश में हुए थे कहने का अभिप्राय यह है कि सुरथ राजाके प्रति देवी का प्रसन्न होना विस्तृत प्रसङ्ग जहाँ मार्कण्डेय ने

अथ प्रथमाध्याय प्रारम्भः ॥

ॐ नमश्चंडिकायै ॥ ॐ ऐं मार्कण्डेय* उवाच ॥१॥ सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः । निशामय तदुत्पत्तिं विस्तराद्गदतो मम ॥२॥ महा-

---

कौष्टिक से कहा था वही सब स्थल मार्कण्डेय उवाच यहाँ से पक्षिगण ने जैमिनि से यथावत आरम्भ किया ॥

प्रथम चरित्र के ब्रह्मा ऋषि हैं, महा काली देवता है, गायत्री छन्द, रक्तदन्तिका बीज, अग्नितत्व, ऋग्वेद की मूर्ति के समान स्वरूप है, इसका प्रयोग महाकाली के प्रीत्यर्थ है। इतना जानना आवश्यक है परन्तु विनियोग बोलकर जल छोड़ना

---

*सम्पुट पाठ दो प्रकार का है उदय और अस्त; वृद्धि के लिये उदय और अभिचार के लिये अस्त ॥ उदय संपुट का लक्षण ॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ॐ ऐं मार्कण्डेय उवाच ऐं ह्रीं क्लीं चामुण्डायै विच्चे नमः ॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे सावर्णिः सूर्य तनयो योमनुः कथ्यतेऽष्टमः ॥ निशामय तदुत्पत्ति विस्तराद्गदतोमम ऐं ह्रीं क्लीं चामुण्डायै विच्चे नमः ॥ अस्त संपुट के पाठ का उदाहरण ॥ हुँफट् ॐ ऐं मार्कण्डेय उवाच फट्हुँ ॥ हुँफट् सावर्णिः सूर्यतनयो योमनुः कथ्यतेष्टमः ॥ निशामय तदुत्पत्ति विस्तराद्गदतो मम फटहुम् ॥

१ २ १ ३ २ १ २ १

नव दिन में १ पाठ की विधि पा ठो यं व र का र कः ॥ पहले दिन में १ पाठ, दूसरे दिन में २, तीसरे में १, चौथे में ३, पाँच में १, छठे २, सातवें २, आठवें १

---

चण्डी देवी को नमस्कार ॥ श्री मार्कण्डेय ऋषि बोले, ॥१॥ सूर्य भगवान् के पुत्र सावर्णि जो आठवें मनु कहे जाते हैं, उनकी उत्पत्ति की कथा मैं विस्तार पूर्वक कहता हूँ, हे भागुरि तुम सुनो! ॥२॥ सूर्य के वही पुत्र (सूर्य की छाया से उत्पन्न) महाभाग-

मायानुभावेन यथा मन्वन्तराधिपः ॥ स बभूव महा-
भागः सावर्णिस्तनयो रवेः ॥३॥ स्वारोचिषेऽन्तरे
पूर्वं चैत्रवंशसमुद्भवः ॥ सुरथो नाम राजाभूत्समस्ते
क्षितिमण्डले ॥४॥ तस्य पालयतः सम्यक् प्रजाः
पुत्रानिवौरसान् ॥ बभूवुः शत्रवो भूपाः कोलाविध्वं-
सिनस्तदा ॥ ५ ॥ तस्य तैरभवद्युद्धमतिप्रबल-

---

चाहिये। बाद में ध्यान बोलना जो चित्र दिया है उसको अपने हृदय ही में स्थित ध्यान करते हुए पाठ करना ॥ खड्ग, चक्र, गदा, बाण, चाप ( धनुष ) परिघ, त्रिशूल, भुशुण्डी, शिर, शंख इन मुद्राओं को दिखाना पृष्ठ १५२-५५ संख्या में लिखी हैं, मुद्रा न बन सकें तो ध्यान मात्र कर लेना, महा काली इन दश आयुधों को अपने दश हाथों में धारण करे हुए दश शिरों में तीन २ आँख १० पैर तथा सब अंगों में शोभायमान आभूषण पहरे हुए नील मणि के समान शरीर का रंग भगवान विष्णु योगनिद्रा में शयन कर रहे हैं भगवान् की नाभि से कमल

---

सावर्णि जिस प्रकार जगदम्बा की दया से मन्वन्तराधिप हुए सो भी मैं कहता हूँ ॥३॥ पूर्वकाल में स्वरोचिष-मन्वन्तर के चैत्र वंश में पैदा हुए राजा सुरथ सब पृथ्वी के चक्रवर्ती राजा हुए ॥४॥ सुरथ राजा अपनी प्रजा का निज पुत्र के समान पालन करते थे ॥ उसी काल में कोलाविध्वंसी ( सूअर को न मारने वाले ) अथवा कोला नाम की नगरी दक्षिण में प्रसिद्ध है वहाँ के बहुत से राजा उस ( सुरथ ) के शत्रु हो गये ॥५॥ फिर भी अति दुष्ट मनुष्यों को सजा देने वाले सुरथ

दण्डिनः ॥ न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥६॥ ततः स्वपुरमायातो निजदेशाधिपोऽभवत् ॥ आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः ॥७॥ अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः ॥ कोशो बलं चापहृतं तत्रापि स्वपुरे ततः ॥ ८ ॥ ततो मृगयाव्याजेन हृतस्वाम्यः स भूपतिः ॥ एकाकी हयमारुह्य जगाम गहनं वनम् ॥ ९ ॥ स तत्राश्रम-

---

उत्पन्न हैं तिस पर ब्रह्माजी बैठे हैं इसी बीच में मधु कैटभ दो राक्षस ब्रह्माजी को खाने के लिये आते हैं। तब ब्रह्माजी ने भयभीत हो महामाया की स्तुति करी थी ऐसी उपरोक्त लक्षण वाली महाकाली का स्मरण करता हूँ ॥

---

राजा के संग कोलाविध्वंसियों का अत्यन्त युद्ध हुआ ॥ सेना, कोष, (खज़ाना) और युद्ध की कई बातों में कमी होने पर भी कोलाविध्वंसी लोगों ने सुरथ राजा को हराया ॥६॥ तब वह राजा मन मलीन हो, अपने ही शहर में लौट कर अपने, शहर का राजा होकर रहने लगा ॥ तदनन्तर उन बलवान् शत्रुओं के द्वारा वह महाभाग राजा सुरथ फिर घेरा गया ॥७॥ और अपने शहर में भी दुष्ट, दुराचारी, अमात्यगण (मन्त्रियों) ने प्रबल राजा का कोष (खज़ाना), पल्टन और युद्ध की सामग्री हरण कर ली ॥८॥ तब तेज-हीन होकर वह राजा सुरथ घोड़े पर बैठ शिकार खेलने के बहाने बिना किसी को साथ लिये अकेला घोर वन में गया ॥९॥ राजा सुरथ ने वहाँ ब्राह्मणों में श्रेष्ठ

## दुर्गार्चन स्मृतौ नं० २

## त्रिगुणात्मक ध्यान



ॐ विद्युद्दाम सम
प्रभां मृगपति स्कन्ध
स्थितां भीषणाम् ।
कन्याभिः करवाल
खेट बिलसद्धस्ताभि-
रासेविताम् ॥



दुर्गादत्त भक्त



हस्तै श्चक्रगदासि
खेटविशिखाश्चापं
गुणं तर्जनीं बिभ्राणा-
मनलात्मिका
शशिधरां
दुर्गां त्रिनेत्रां भजे



मद्राक्षीद्द्विजवर्यस्य मेधसः ।। प्रशान्तश्वापदाकीर्णं मुनिशिष्योपशोभितम् ।। १० ।। तस्थौ कञ्चित्स कालं च मुनिना तेन सत्कृतः ।। इतश्चेतश्च विचरँस्तस्मिन्मुनिवराश्रमे ।।११।। सोऽचिन्तयत्तदा-तत्र ममत्वाकृष्टचेतनः ।। मत्पूर्वैः पालितं पूर्वं मया हीनं पुरं हि तत् ।। १२ ।। मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः पाल्यतेनवा ।। न जाने सप्रधानो मे शूरहस्ती सदामदः ।।१३।। ममवैरिवशं यातः कान्भोगानु-

मेधा ऋषि का हिंसा-रहित शान्त श्वापद जन्तुओं से भरा और मुनि* बालकों से शोभायमान आश्रम देखा ।।१०।। उस आश्रम में मुनियों द्वारा सत्कार प्राप्त हो इधर-उधर टहलता हुआ राजा सुरथ कुछ काल तक वहाँ ठहरा ।।११।। देश, राज्य तथा कोषादि की ममता से मलीन चित्त हो राजा इस प्रकार सोचने लगा ।। मेरे पूर्वजों की रक्षा करी हुई वह राजधानी मुझ से नष्ट हो ।।१२।। उन दुराचारी मेरे मंत्रियों से धर्मानुसार पालन की जाती है क्या ? और नहीं जानता कि हमेशा मद से मत्त रहने वाला मेरा प्रधान हाथी ।।१३।। मेरे दुश्मनों के वशीभूत हो किस

सप्तश्लोकी दुर्गा प्रारंभ्यते ।।

शिव उवाच ।। देवि त्वं भक्तसुलभे सर्वकार्यविधायिनि ।। कलौ हि कार्यसिद्ध्यर्थमुपायं ब्रूहियत्नतः ।। देव्युवाच ।। शृणुदेव ! प्रवक्ष्यामि कलौ सर्वेष्टसाधनम् । मयातवैवस्नेहेनाप्यम्बास्तुतिप्रकाश्यते ।। ॐ अस्यश्रीदुर्गा सप्तश्लोकी स्तोत्रमंत्रस्य नारायणऋषिः अनुष्टुपछन्दः श्री महाकाली महालक्ष्मी महासरस्वत्यो देवताः दुर्गाप्रीत्यर्थं सप्तश्लोकी दुर्गा

*मन्तारो वेदशास्त्रार्थतत्त्वावगन्तारो मुनयः ।



पलप्स्यते ॥ ये ममानुगता नित्यं प्रसादधनभोजनैः ॥१४॥ अनुवृत्तिं ध्रुवं तेऽद्य कुर्वन्त्यन्यमहीभृताम् ॥ असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम् ॥१५॥ सञ्चितः सोऽतिदुःखेन क्षयं कोशो गमिष्यति ॥ एतच्चान्यच्च सततं चिन्तयामास पार्थिवः ॥१६॥ तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः ॥ स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥ १७ ॥ सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे ॥ इत्या-

---

प्रकार सुख पाता है और नित्य-प्रति खुशी से धन और भोजन मुझसे लेकर जो मेरे अधीन रहा करते थे, ॥१४॥ वे सब अब अवश्य ही दूसरे नृपति की चाकरी करते होंगे ॥ सदा बिना विचार से व्यय करने वाले सब दुष्ट मन्त्री आदि ॥१५॥ कष्ट से संग्रह किया गया मेरे पूर्वजों का धन अवश्य ही नित्य व्यय करके नाश करते होंगे ॥ इस प्रकार तथा और-और भाँति से राजा सोच में मग्न हो गया ॥१६॥ इसके बाद उस मेधा ऋषि के आश्रम के सन्निकट सुरथ राजा ने एक वैश्य को आते देखकर उससे पूछा, "तुम कौन हो ? तथा यहाँ आने का कारण क्या है ?" ॥१७॥ और तुम शोक से दुःखित मनुष्यों की तरह उदास क्यों हो ?

---

पाठे विनियोगः ॥ ॐ ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥ बलादाकृष्यमोहाय महामायाप्रयच्छति ॥ १ ॥ दुर्गेस्मृताहरसि भीतिमशेषजन्तोः स्वस्थैः स्मृतामतिमतीव शुभां ददासि ॥ दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणायसदार्द्र चित्ता ॥ २ ॥ सर्वमंगलमंगल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥३॥ शरणागतदीनार्त परित्राणपरायणे ॥ सर्वस्यार्तिहरे देवि नारायणि नमो-

कर्ण्य वचस्तस्य भूपतेः प्रणयोदितम् ॥१८॥ प्रत्यु-
वाच स तं वैश्यः प्रश्रयावनतो नृपम् ॥१९॥ वैश्य
उवाच ॥२०॥ समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां
कुले ॥ २१ ॥ पुत्रदारैर्निरस्तश्च धनलोभादसा-
धुभिः ॥ विहीनश्च धनैर्दारैः पुत्रैरादाय मेधनम्
॥२२॥ वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः
॥ सोऽहं न वेद्मि पुत्राणांकुशलाकुशलात्मिकाम् ॥
२३॥ प्रवृत्तिं स्वजनानाञ्चदाराणाञ्चात्र संस्थितः ॥

---

राजा की स्नेह में सनी हुई बातों को सुन ॥१८॥ उस नम्रतायुक्त समाधि वैश्य ने राजा से इस तरह कहा ॥१९॥ वैश्य बोला ॥२०॥ हे राजन् मैं समाधि नामक बनियाँ हूं, मेरा जन्म धनवानों के घर में हुआ ॥२१॥ मेरे असाधु पुत्र, स्त्री और कुटुम्बियों ने धन के लोभ से मुझे घर से निकाल दिया ॥ मेरे पुत्र, स्त्री और कुटुम्बियों ने मिलकर सब रुपया छीन कर मुझे निकाला है ॥२२॥ अब मैं स्वजन हीन तथा दुःखी हो इस वन में आया हूँ ॥ इस समय इस वन में मुझे अपने पुत्र, स्त्री तथा बन्धुलोगों के अच्छे बुरे हालात नहीं मालूम होते ॥२३॥ यहाँ बैठा हुआ अपने स्वजन आदिकों की स्थिति तथा उनके स्थान में अब

---

स्तु ते ॥ ४ ॥ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहिनो देवि दुर्गेदेवि नमोस्तु ते ॥ ५ ॥ रोगानशेषानपहंसि तुष्टारुष्टा तु कामान्सकलानभीष्टान् ॥ त्वामाश्रितानां न विपन्नराणां त्वामाश्रिताह्याश्रयतां प्रयान्ति ॥ ६ ॥ सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ! ॥ एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥ ७ ॥ इति श्री सप्तश्लोकी दुर्गा समाप्ता ॥



किं नु तेषां गृहे क्षेममक्षेमं किं नु साम्प्रतम् ॥२४॥ कथं ते किं नु सद्वृत्ताः दुर्वृत्ताः किं नु मे सुताः ॥ २५ ॥ राजोवाच ॥ २६ ॥ यैर्निरस्तो भवांल्लुब्धैः पुत्रदारादिभिर्धनैः ॥ २७ ॥ तेषु किं भवतः स्नेहमनुबध्नाति मानसम् ॥२८॥ वैश्य उवाच ॥२६॥ एवमेतद्यथा प्राह भवानस्मद्गतं वचः ॥३०॥ किं करोमि न बध्नाति मम निष्ठुरतां मनः ॥ यैः सन्त्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ॥

---

मङ्गल है व अमङ्गल ॥२४॥ मेरे लड़के सदाचारी हैं या दुराचारी, सो मैं कुछ नहीं जानता हूं ॥२५॥ राजा ने कहा ॥२६॥ "जिन पुत्र स्त्री तथा बन्धुओं ने लोभ के वश तुम्हारा धन सम्पत्ति छीन ली ॥२७॥ उन्हीं मनुष्यों के प्रति तुम्हारा मन किस प्रकार स्नेह में गोता खाता है ?" ॥२८॥ वैश्य ने कहा ॥२६॥ आपने मेरे विषय में जो कुछ भी कहा है ॥३०॥ सब सत्य है परन्तु मैं क्या करूँ, मेरे मन में किसी प्रकार भी कठोरता नहीं होती ॥ जिन मेरे पुत्रादिकों ने द्रव्य के वशीभूत हो पितृ-स्नेह त्याग मुझको

---

अथ चण्डिका दल प्रारम्भः ॥

ॐ नमश्चण्डिकाय ॥ अथातः सम्प्रवक्ष्यामि चण्डिका दल मुत्तमम् ॥ मन्त्रं विना तु जप्त्वा वै तत्सर्वं निष्फलं भवेत् ॥१॥ ॐ नमो भगवति जयजय चामुण्डे चण्डि चण्डेश्वरि चण्डायुधे ॥ चण्डरूपधारिणि ताण्डव प्रिये ॥ कुण्डलीभूतदिक् नागमण्डलीकृतगण्डस्थले समस्तजगदण्ड संहार कारिणि परे अनन्तानन्तरूपे ॥ शिवे नरशिरोमालालंकृत वक्षस्थले महाकपाल भालोज्ज्वलन्मणि मुकुट चूडावतंस चन्द्रखण्डे महाभीषणे देवि ॥ महामाये षोडशकलापरिवृतोल्लासिते महादेवासुर समरनिहत रुधिरार्द्रीकृता




दुर्गादत्त भक्त

ॐ खड्गं चक्र गदेषु चाप परिघाञ्छूलं भुशुण्डीं शिरः ॥
शंखं सन्दधतींकरैस्त्रिनयनां सर्वाङ्गभूषावृताम् ॥
नीलाश्मद्युतिमास्य पाद दशकां सेवे महाकालिकाम् ॥
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥ ३ ॥



३१॥ पतिस्वजनहार्द च हार्दितेष्वेव मे मनः ॥
किमेतन्नाभिजानामि जानन्नपि महामते ॥ ३२ ॥
यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु ॥ तेषां कृते
मे निःश्वासो दौर्मनस्यं च जायते ॥३३॥ करोमि
किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम्॥३४॥ मार्कण्डेय
उवाच ॥३५॥ ततस्तौ सहितौ विप्र तं मुनिं समु-

---

घर से निकाल ,दिया है ॥३१॥ उन सबके ऊपर मेरा मन आसक्त है, हे महामति राजन् ! ऐसा क्यों है यह मैं जानता हुआ भी नहीं समझता हूँ ॥३२॥ इसलिये कि विपरीत पुत्रादिकों के लिये भी मेरा मन प्रेम में मग्न है और उन्हीं के कारण ये मेरे ऊर्ध्वश्वास चल रहे हैं, और मेरी यह चिन्ता मुझको ही दुःख देती है ॥३३॥ इन मेरे कुटुम्बियों के प्रीति रहित होने से भी मेरे मन में कठोरता नहीं होती है, तो मैं क्या करूँ ? तब ॥३४॥ मार्कण्डेयजी ने कहा ॥३५॥ अनन्तर इसके राजा सुरथ

---

लम्बिततनु कमलोद्भासित करे ॥ सम्पूर्ण रुधिर शोभित महाकपोल वक्त्रहासिनि दृढ़तरनिबद्धयमानाधर शोभित महाकपोले॥ चन्द्रभासिनि॥ दृढ़तराबद्ध महानाद सहिते हेमकाञ्ची दामोज्वलीकृत महामण्डिते ॥ महाशम्भुरूपे महाव्याघ्र चर्माम्बरधरे ॥ महासर्प यज्ञोपवीतिनि ॥ महाश्मशान भस्मोद्धूलित सर्वगात्रे ॥ कालि ॥ कंकालि महाकालि कालाग्नि रुद्रकालि ॥ काल-संकर्षिणि ॥ कालरात्रि नमोदुष्टभक्षिणि ॥ नानाभूतप्रेत पिशाचगण सहस्र सञ्चारिणी नाना व्याधि प्रशमनि ॥ सर्व दुष्ट प्रमथिनि सर्व दारिद्रय नाशिनि युगे युगे खादित मांसखण्डे ॥ गायत्री विज्ञप्त कला कलायमान कंकालधारिणि मधु मांस रुधिर सन्तत विलासिनि सकल सुरासुर गन्धर्व विद्याधर किन्नर किम्पुरुषादिभिः स्तूयमाने सर्व मन्त्राधिभूताधिकारिणि सवशक्ति प्रधाने ॥ सकललोक पावनि ॥ सकल दुरित

पस्थितौ ॥ ३६ ॥ समाधिर्नाम वैश्योऽसौ स च पार्थिवसत्तमः ॥ कृत्वा तु तौ यथान्यायं यथार्हं तेन संविदम् ॥ ३७ ॥ उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥३८॥ राजोवाच॥३९॥ भगवंस्त्वामहं प्रष्टुमिच्छाम्येकंवदस्व तत् ॥४०॥ दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना ॥

---

और समाधि नाम वैश्य दोनों मिलकर उस आश्रम के स्वामी मेधा नाम मुनि के समीप गये ॥३६॥ और शास्त्रोचित अभिवादन पूर्वक उनके पास बैठकर वह राजा और वैश्य परस्पर दोनों प्रीति पूर्वक ॥३७॥ मेधा ऋषि से अनेक प्रकार की कथा प्रसंग करने लगे ॥ ३८ ॥ राजा बोला ॥ ३९ ॥ हे भगवन् ! जिस बात के न जानने से मेरे चित्त में अत्यन्त क्लेश होता है ॥ ४० ॥ वही बात जानना चाहता हूँ, आप कृपा

---

प्रक्षालिनि॥सकललोकजननि॥ब्राह्मि॥माहेश्वरि॥कौमारि॥वैष्णवि॥वाराहि नारसिंहीन्द्राणि॥चामुण्डे॥महालक्ष्मीस्वरूपे॥महाविद्ये॥योगिनि॥योगीश्वरी चण्डिके॥महामाये॥ विश्वरूपिणि॥ सर्वाभरणभूषिते॥ अतलवितलसुतल महातल रसातल पातालादि चतुर्दशभुवनैकनाथे ॥ ॐ नमः पितामहाय॥ ॐ नमोनारायणाय ॥ॐ नमःशिवाय ॥इतिसकललोकैकजायमाने ॥ ब्रह्म विष्णुमहेश्वरि॥दण्ड-कमण्डलु-धारिणि॥शंखचक्रगदापद्म-धारिणि॥परशु-शूल-पिनाक-कण्टक-धारिणि सरस्वतिपद्मालये॥ सावित्रि ॥ सकल जगत्स्वरूपिणि महाक्रूरे॥प्रसन्नरूपधारिणि॥सर्वमंगलप्रिये॥महिषासुरमर्दिनि कात्यायनि दुर्गे॥निद्रारूपिणि ॥ शर चापशूलकपाल करवाल खड्ग डमरु-काङ्कुश गदा परशु तोमर भिन्दिपाल भुशुण्डी मुसल मुद्गर परिघायुध दोर्दण्डिनि सहस्र चन्द्रार्क वह्नि नयने ॥ इन्द्राग्नि यम नैर्ऋति वरुण वायु कुबेर ईशान प्रधानशक्ति भूते ॥ सप्तद्वीप समुद्रोपर्युपरि महाभ्यासेश्वरि महा चराचर प्रपञ्चतनूदरे ॥ महाप्रधाने महाकैलासपर्वतोद्यान वन

ममत्वं गतराज्यस्य *राज्याङ्गेष्वखिलेष्वपि
॥ ४१ ॥ जानतोऽपि यथाज्ञस्यकिमेतन्मुनि-
सत्तम ॥ अयंच निःकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः
॥४२॥स्वजनेन च सन्त्यक्तस्तेषु हार्दी तथाप्यति ॥
एवमेष तथाहं च द्वावप्यत्यन्त-दुःखितौ ॥ ४३ ॥
दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ॥ तत्केनैतन्म
हाभाग यन्मोहो ज्ञानिनोरपि ॥४४॥ ममास्य च

करके उसको समझा दीजिये ॥ और मैं यह जानता हूं कि यह सब चक्कर है, तो भी मूर्खता वश मुझे राज्य सम्पूर्ण राज्य के अङ्गों पर* ममता है ॥४१॥ हे मुनिसत्तम ! ऐसा क्यों है ? तथा इस वैश्य को भी पुत्रादिकों ने तिरस्कार कर, स्त्री सेवक और स्वजनों ने निकाल दिया है ॥४२॥ फिर भी यह उन्हीं पर मोह करता है ॥४३॥ इस प्रकार मैं और यह वैश्य दोनों का साफ़ साफ़ दूषित विषय में स्नेह युक्त मन होगया है ॥४४॥ हे महा-भाग ! हम दोनों ही जान कर माया में ज्ञान शून्य लोगों की तरह

क्षेत्र नदी तीर देवताद्यायतनालंकृते । मेदिनीनाथे ॥ वसिष्ठ-वामदेवादि मुनिगणस्पर्शश्चिरणारविन्दे ॥ द्विचत्वारिंशद्वर्ण सहिते ॥ पर्यायस्थाने वेदवेदाङ्गानेकशास्त्रभूते ॥ शब्द ब्रह्ममये ॥ मातृकादेवि शिरःसं रक्ष रक्ष ॥ मम शत्रून्हुंकारेण नाशय नाशय ॥ भूत प्रेत पिशाचानुच्चाटयोच्चाटय ॥ वशीकुरु वशीकुरु ॥ क्षोभय क्षोभय ॥ संक्रामय २ ॥ विदारय-विदारय ॥ द्रावय-द्रावय ॥ सकल चौरान्मूर्द्धिन स्फोटय स्फोटय सकल शत्रून् शीघ्रं मारय मारय हुँफट् स्वाहा ॥ इतिरुद्रयामले तन्त्रे सप्तशती दलम् सम्पूर्णम् ॥

*सप्ताङ्ग कामकन्दकीये ॥ स्वाम्यमात्यश्च राष्ट्रं च दुर्गंकोषोबलं सुहृत् ॥ परस्परोपकारीदं सप्ताङ्ग राज्यमुच्यते ॥



भवत्येषा विवेकान्धस्य मूढता ॥४५॥ ऋषिरुवाच
॥४६॥ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे ॥
॥४७॥ विषयश्च महाभाग याति चैवं पृथक् पृथक् ॥
दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथा परे ॥४८
केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥ ज्ञानिनो
मनुजाः सत्यं किंनु ते नहि केवलम् ॥४६॥ यतो
हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ॥ ज्ञानं च

---

क्यों मूर्खता से परिपूर्ण होगये हैं ॥४५॥ ऋषि ने कहा ॥४६॥ सब जन्तुओं को विषय के समझने लायक ज्ञान है ॥४७॥ हे महाभाग! इसी प्रकार से विषय भी अलग-अलग होता है ॥ कोई मनुष्य दिन में नहीं देखते, कोई रात्रि में नहीं देखते ॥४८॥ और कोई मनुष्य रात्रि दिन में समान ही देखते हैं। आदमी सब विवेकी हैं इसमें कुछ सन्देह नहीं, फिर भी मनुष्य ही केवल ज्ञानी नहीं क्योंकि पशु-पक्षी और मृग भी ज्ञानवान हैं ॥४६॥ जो ज्ञानवान हैं वा जो ज्ञान इन मृग पक्षियों को है वही ज्ञान* मनुष्यों को भी है। और मनुष्यों को भी जो

---

अथ सप्तशती हृदय प्रारम्भः ॥

इसमें नवार्ण के अनुसार न्यास ध्यान करना ॥

ॐ अस्य श्रीचण्डिका हृदयमाला मन्त्रस्य त्रिगुणात्मक ऋषिः विराट् छन्दः श्रीमहाचण्डी देवता ऐं बीजं ॥ ह्रीं शक्तिः ॥ क्लीं कीलकम् अभीष्ट सिद्धयर्थे जपे विनियोगः ॥ ब्रह्मोवाच ॥ अथातः सम्प्रवक्ष्यामि विस्तरेण यथा तथम् ॥ चण्डिका हृदयं गुह्यं शृणुष्वेकाग्रमानसः ॥ ॐ

---

*आहार निद्राभय मैथुनञ्च सामान्य मेतत्पशुभिर्नराणां ॥ ज्ञानं नराणामधिको विशेष ज्ञानेन हीनापशुभिः समाना ॥

तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ॥५०॥ मनु-
ष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः ॥ ज्ञानेऽपि
सति पश्यैतान्पतङ्गाञ्छावचञ्चुषु ॥५१॥ कणमो-
क्षादृतान्मोहात्पीड्यमानानपि क्षुधा ॥ मानुषा मनु-

---

विवेक है सो इन दोनों (मृग पक्षियों) को भी बराबर है ॥५०॥
इस प्रकार विवेक होने पर भी कितना फरक हो जाता है,
सो देखिये, ये सब पक्षी भूख से दुःखी रहते हुए भी अपने
बच्चों की चोंच में अन्न देकर किस तरह खुश होते हैं ॥५१॥ हे
मनुज व्याघ्र ! आदमी (लोग) अपने पुत्रों पर मतलब से उनका

---

ह्रां ह्रीं हुँ ऐं क्लीं श्रीं ॐ नमो भगवति जय जय ज्वालामालिनि ॥ चामुण्डे चण्डिके ॥ त्रिदशमणिमुकुटकोटिनिघृष्टचरणारविन्दे ॥ गायत्रि सावित्रि सरस्वति महासन्ध्ये महाबाण कृताभरणे ॥ भैरवरूपधारिणि प्रकट सुदंष्ट्रोप्रवदने ॥ घोरे घोरासने नयनोज्ज्वलज्वाल सहस्र परिवृते ॥ महाट्टहास धवलीकृत दिगन्तरे ॥ दिवाकर सहस्र परिवृते ॥ कामरूप धारिणि ॥ महामणि द्योतित शशि प्रभा भासित सकल दिगन्तरे ॥ सर्वायुध परिपूर्णे ॥ कपालहस्ते ॥ गजगामिन्यौत्तरिण्ये ॥ भूत वेताल परिवृते प्रकम्पित चराचरे ॥ मधुकैटभ महिषासुर धूम्रलोचन ॥ चण्ड मुण्ड रक्तबीज निशुम्भ शुम्भादि दैत्य निष्कण्टिके ॥ कालरात्रि महामाये ॥ शिवेनित्ये ॥ त्रिभुवन धराधरे ॥ वामे ज्येष्ठे वरदे रौद्रि अम्बिके ॥ कालि कलविकरिणि ॥ बल-प्रमथिनि ॥ सर्वभूतदमनि ॥ मनोन्मथ्यधारिणि ॥ ब्राह्मि माहेश्वरि कौमारि वैष्णवि ॥ वाराहि नारसिंहीन्द्राणि चामुण्डे ॥ माहेन्द्रि शिवदूति महाकाली महालक्ष्मी महासरस्वतीति त्रिस्थिते ॥ नादमध्येस्थिते॥ महोग्र विषोरग फणाफणि मुकुट रत्नज्वालावलि ॥ महाहिहार भूषित पाद बाहुकण्ठोत्तमाङ्गे ॥मालाकुले ॥ नवरत्न निधिकोशे शब्द स्पर्श रूप रस गन्धाकाश वाक्पाणि पाद पायूपस्थ श्रोत्र त्वक् चक्षुर्जिह्वाघ्राण मध्यस्थिते ॥ चक्षुष्मति महाविषोपविघ्ने ॥ महाज्वालानले ॥ महाभैरवस्तुते सर्वसिद्धप्रदे ॥ निर्मले निष्कले नाभ्याधारादि संस्थिते ॥ परं ज्योतिः

जन्याग्र साभिलाषाः सुतान्प्रति ॥५२॥ लोभात्प्रत्युपकारायनन्वेतान् किंनपश्यसि ॥ तथापिममतावर्ते मोहगर्तेनिपातिताः ॥ ५३ ॥ महामायाप्रभावेण संसारस्थिति-कारिणा ॥ तन्नात्रविस्मयः कार्यो

---

पालन पोषण ॥५२॥ बदला लेने की इच्छा से करते हैं (अर्थात् जब हम वृद्धावस्था में प्राप्त होंगे तब यह हमारा भी इसी प्रकार से भरण पोषण करेंगे ! ) सो (मनुष्य) नहीं जानते ॥५३॥ इस तरह बदला लेने की इच्छा न होने पर भी जगदम्बा के प्रसाद से अब आदमी मोह जाल तथा मोहान्ध कूप में गिर कर संसार को कायम रखने वाले हैं ॥ इस विषय में अचम्भा मानने की

---

स्वरूपे ॥ सोम सूर्याग्नि मण्डल परिवृते ॥ ऊर्ध्व विशुद्धान्तक प्रभे ॥ विनिर्गत ब्रह्म विष्णु रुद्र दैवते ॥ परे अपरे ॥ प्रभा भासित चराचरे ॥ पञ्चविंशति तत्वावबोधिनि ॥ महाशून्यागमे ॥ पतिबन्धु संस्थिते ॥ भुक्ति मुक्ति प्रदे ॥ निर्गुणे ॥ ऋग्यजुःसामाथर्वणि पठिते ॥ एह्येहि भगवति स्थूल सूक्ष्म परे हुङ्कार निरूपते ॥ परमकारुणिके ॥ महाज्वाला मणे मरिषोपरि गन्धर्व विद्याधरार्चिते ॥ भुजङ्ग महिमे ॥ जम्भिणि ॥ वशीकरिणि ॥ जृम्भे ॥ मोहे ॥ क्षोभे ॥ बीज पंचक मध्यस्थिते ॥ महायोगिनि ॥ महाज्वर क्षेत्रनायिके ॥ यक्ष राक्षस महाज्वर क्षेत्र विषोपविघ्ने ॥ गन्धर्व विद्याधराराधिते ॥ ॐकार श्रीङ्कार हृस्ते ॥ आं क्रीं अग्निपात्रे ॥ द्रां शोषय शोषय ॥ प्लुं स्रावय स्रावय ॥ क्लीं श्रीं सुकुमारय सुकुमारय ॥ प्लुं नाशय नाशय ॥ सीं उन्मादय उन्मादय ॥ ग्लौं मोहय मोहय ॥ ह्रीं आं ह्रीं आवेशय आवेशय ॥ श्रीं प्रवेशय प्रवेशय ॥ स्त्रीं आकर्षय २ हुँ हुँ हुँ फट् अतीतानागत वर्तमनान्दिशं विदिशं ॥ ऐं ह्रीं श्रीं स्रावय स्रावय ॥ सर्वं प्रवेशय प्रवेशय ॥ त्रैलोक्यं वशवर्ति ॥ ऐंकारं वशीकुरुध्व ॥ ऐं ह्रीं क्लीं द्रावय द्रावय ॥ सर्वं प्रवेशय प्रवेशय ऐङ्कारचितां वशंकुरु वशंकुरु ॥ ऐं ह्रीं श्रीं हां हीं हूं हैं हौं हः । ह्रीं श्रीं आं क्लीं स्त्रूं स्त्रैं स्त्रौं स्त्रः मम सर्वकार्याणि साधय साधय हुँफट् स्वाहा ॥

योगनिद्राजगत्पतेः ॥ ५४ ॥ महामाया हरेश्चैषा तया संमोह्यते जगत् ॥ ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥५५॥ बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ तया विसृज्यते विश्वं जगदेतच्चराचरम् ॥ ५६ ॥ सैषाप्रसन्नावरदानृणांभवति मुक्तये ॥ साविद्यापरमामुक्तेर्हेतुभूता सनातनी ॥ ५७॥ संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥५८॥ राजोवाच ॥५९॥ भगवन्का हिसा देवी महामायेति यां भवान्॥६०॥ ब्रवीति कथमुत्पन्ना सा कर्मास्या-

कोई बात नहीं॥महामाया त्रिलोकीनाथ हरि की योगमाया है।५४। वही इस संसार को मोह में गेरे रहती है॥ वही भगवती महामाया ज्ञानियों का चित्त बलात् खींचकर मोह में गिरा देती है॥५५॥ उस ही देवी ने इस चराचर जगत् को सृजन (पैदा) किया है॥५६॥ वही खुश हो मनुष्य को मुक्ति देने वाला वर देती है॥ वही मुक्ति और मोक्ष का परम कारण है, और वही सनातनी ब्रह्म ज्ञान स्वरूपा विद्या है॥५७॥ वही संसार के बन्धन का (अर्थात् जन्म मरण का) कारण है, और वही सर्वेश्वर की भी ईश्वरी है॥५८॥ राजा बोला॥५९॥ हे भगवन्! जिसको आप महामाया कह-कह कर सम्बोधन करते हैं वह देवी कौन है॥६०॥

एक विंशति वारन्तु पठेदेवञ्जपेत्तुवा॥ राजद्वारे श्मशाने च विदेशे शत्रु मंडले॥१॥ भूताग्नि रण मध्ये च सर्वकार्याणि साधयेत्॥ चण्डिका हृदयं गुह्यं त्रिसन्ध्यं कीर्तयेद्द्विजः॥ २॥ सर्व कामप्रदं नृणां भुक्ति मुक्तिं च विन्दति॥३॥ इति रुद्रयामले तन्त्रे सप्तशती हृदयं सम्पूर्णम्॥

श्च किं द्विज ॥ यत्स्वभावा च सा देवीयत्स्वरूपा यदुद्भवा ॥ ६१ ॥ तत्सर्वं श्रोतुमिच्छामित्वत्तोब्रह्म-विदांवर ॥ ६२ ॥ ऋषिरुवाच ॥६३॥ नित्यैवसा जगन्मूर्तिस्तया सर्वमिदं ततम् ॥ ६४ ॥ तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥देवानां कार्यसिद्ध्य-र्थमाविर्भवतिसा यदा ॥६५॥ उत्पन्नेति तदालोके सानित्याप्यभिधीयते ॥ योगानिद्रांयदाविष्णुर्जगत्ये-कार्णवीकृते॥६६॥आस्तीर्यशेषमभजत्कल्पान्तेभग-वान्प्रभुः॥तदाद्वावसुरौघोरौ विख्यातौमधुकैटभौ ॥

---

उसकी उत्पत्ति किस तरह है ? हे तपोधन ! वह क्या करती है ? उस महारानी का जिस प्रकार का स्वरूप तथा स्वभाव किससे पैदा हुई है ॥६१॥ हे ब्रह्मज्ञानियों में उत्तम ! आपके द्वारा सब बातें सुनने की इच्छा रखता हूँ ॥६२॥ ऋषि ने कहा—॥६३॥ वह जगन्मूर्त्ति जगदम्बा है ( न कभी जन्म ग्रहण करती है न मरती है) वह सम्पूर्ण संसार अर्थात् चराचर में व्याप्त है ॥६४॥ तो भी उसकी उत्पत्ति अनेक तरह से है, सो मैं कहता हूँ ॥ देवताओं का काम सिद्ध करने के लिये जब वह दर्शन देती है ॥६५॥ तब ही उस नित्य रहने वाली को मनुष्य "उत्पन्न हुई" कहते हैं ॥ कल्प के बाद जब सृष्टि ( संसार ) जल में मग्न हो ( डूब ) जाती है ॥६६॥ तथा भगवान् विष्णु शेष शय्या पर योगनिद्रा में शयन करते हैं ; इसके बाद भगवान् विष्णु के कान के मैल से पैदा हो मधु कैटभ



॥६७॥विष्णुकर्णमलोद्भूतौहन्तुंब्रह्माणमुद्यतौ ॥ स नाभिकमले विष्णोः स्थितो ब्रह्मप्रजापतिः ॥६८॥ दृष्ट्वा तावसुरौचोग्रौ प्रसुप्तं च जनार्दनम् ॥ तुष्टाव योगनिद्रांतामेकाग्र हृदयस्थितः ॥ ६९ ॥ विबोधनार्थायहरेर्हरिनेत्रकृतालयाम् ॥ विश्वेश्वरींजगद्धात्रीं स्थितिसंहारकारिणीम् ॥७०॥निद्रांभगवतीं विष्णोरतुलां तेजसः प्रभुः ॥७१॥ ब्रह्मोवाच ॥७२॥ त्वं स्वाहा त्वंस्वधात्वंहि वषट्कारः स्वरात्मिका ॥७३॥

---

नाम के ॥६७॥ दो विख्यात बड़े भयानक राक्षस श्री ब्रह्माजी को खाने के लिये तयार होते हैं ॥६८॥ उस वक्त विष्णु भगवान की नाभि कमल पर बैठे हुए संसार की रचना करने वाले ब्रह्माजी उन दोनों डरावने ( मधु कैटभ ) राक्षसों को देख कर तथा भगवान् विष्णु को सोता हुआ जानकर विष्णु भगवान् को जगाने के लिये एकाग्र चित्त हो ॥६९॥ विष्णु भगवान की आंख पर बैठी हुई योग निद्रा की स्तुति करने लगे ॥ वह योग निद्रा संसार की ईश्वरी जगत् माता, ( संसार को पालन करने वाली) रक्षा करने वाली तथा सब संसार की नाश करने ॥७०॥ वाली भगवान् विष्णु की निद्रा ( नींद ) स्वरूपा है ॥७१॥ ब्रह्माजी बोले ॥७२॥ हे ब्रह्म स्वरूपे ! अर्थात् सब संसार में व्याप्त हो) तुम स्वाहा (देवताओं के पोषक हवन के मन्त्र ) हो, तुम स्वधा (पितृश्वरों के पोषक श्राद्ध करने के मन्त्र ) हो, तुम ही वषट्कार स्वर ( इन्द्र को यज्ञ भाग पहुँचाने का मन्त्र ) हो ॥७३॥ (हे नित्ये ! तुम सुधा (अमृत) स्वरूपा हो, अक्षर में

सुधात्वमक्षरे नित्ये त्रिधामात्रात्मिका स्थिता ॥ अर्धमात्रास्थितानित्या यानुच्चार्याविशेषतः ॥७४॥ त्वमेवसन्ध्या सावित्रीत्वंदेवि जननी परा॥त्वयैतद्धार्यते विश्वंत्वयैतत्सृज्यते जगत्॥७५॥त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥ विसृष्टौ सृष्टिरूपात्वंस्थिति रूपा च पालने ॥७६॥ तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥ महाविद्या महामाया महामेधा महास्मृतिः ॥७७॥ महामोहा च भवती महादेवी महासुरी ॥ प्रकृतिस्त्वं च सर्वस्य गुणत्रियविभाविनी

---

३ मात्रा ह्रस्व, दीर्घ, (प्लुत) आप ही हो ॥ जिस आधी मात्रा (व्यंजन) का उच्चारण विशेष रूप से नहीं होता है वह आधी मात्रा स्वरूप आप ही हो ॥७४॥ हे देवि ! आप ही संध्या, सावित्री स्वरूपा हो, और आप ही संसार को पैदा करने वाली संसारकी माता हो ॥ आप ही को सब मनुष्य धारण करते हैं ॥७५॥ और आप ही के द्वारा संसार की उत्पत्ति होती है तुम ही से पालन होता है तथा आप ही के द्वारा सदा इस संसार का विनाश होता है ॥ संसार के पैदा करने के समय आप सृष्टि स्वरूप हैं ॥ संसार को पालन करने में स्थिति स्वरूप हो ॥७६॥ हे जगन्मये ! इस संसार के विनाश काल में आप ही संहार रूप हो ! हे देवि ! आप महाविद्या, महामेधा, महामाया, महास्मृति, ॥७७॥ महामोह, महादेवि तथा महेश्वरी हो ॥ हे दुर्गे ! तुम सम्पूर्ण चराचर ( स्थावर जंगम ) के तीन गुण ( सत्व, रज, तम ) की

॥७८॥ कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥
त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ॥
॥७९॥ लज्जापुष्टिस्तथातुष्टिस्त्वं शान्तिः क्षान्तिरेव
च ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा
॥८०॥ शंखिनीचापिनी बाण भुशुण्डीपरिघायुधा ॥
सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ॥ ८१ ॥
परापराणां परमा त्वमेव परमेश्वरी ॥ यच्च किञ्चि-
त्क्वचिद्वस्तुसदसद्वाखिलात्मिके ॥८२॥ तस्यसर्वस्य
या शक्तिः सा त्वं किं स्तूयसे मया ॥ यया त्वया

---

प्रकृति स्वरूप हो ॥७८॥ तुम काल रात्रि (भयंकर यमस्वरूप) महारात्रि ( तमोगुण प्रधान प्रलय स्वरूप ) (दारुण) मोहरात्रि ( संसार को मोहित करने वाली ) स्वरूप हो ॥ हे माये ! तुम श्री हो, तुम ईश्वरी हो, बुद्धि मंत्ररूप दिव्यज्ञान के लक्ष्य हो ॥७९॥ तुम लज्जा, पुष्टि, तुष्टि हो, आप ही शान्ति और क्षान्ति हो आप ही खड्गिनी, शूलिनी, घोरा, गदिनी, चक्रिणी ॥८०॥ शंखिनी, चापिनी हो बाण, परिघ और भुशुण्डी भी तुम्हारे आयुध हैं ॥ हे देवि तुम सौम्या सौम्यतरा हो ॥ और क्या तमाम संसार के सब पदार्थों में तुम अत्यन्त सुन्दरी हो ॥८१॥ हे देवि ! तुम श्रेष्ठा हो, श्रेष्ठों में श्रेष्ठतर हो और श्रेष्ठतरों में भी सम्पूर्ण की ईश्वरी हो ॥ हे अखिलात्मके ! ( हे संसार की आत्मरूप ) जो कुछ भी जिस प्रकार के सद् वा असत् पदार्थ हैं ॥८२॥ उन सब में जो शक्ति है, वह स्वरूप आप ही हो ॥ मैं आपकी क्या किस प्रकार की स्तुति करूं ? जिसने संसार

जगत्स्रष्टा जगत्पात्य त्ति यो जगत् ॥ ८३ ॥
सोऽपि निद्रावशं नीतः कस्त्वांस्तोतुमिहेश्वरः ॥
विष्णुः शरीरग्रहणमहमीशान एवच ॥८४॥ कारि-
तास्ते यतोऽतस्त्वां कःस्तोतुं शक्तिमान् भवेत् ॥
सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ॥८५॥
मोहयैतौ दुराधर्षावसुरौमधुकैटभौ ॥ प्रबोधं च
जगत्स्वामी नीयतामच्युतो लघु ॥८६॥ बोधश्च
क्रियतामस्य हन्तुमेतौ महासुरौ ॥८७॥ ऋषिरुवाच॥
८८॥ एवं स्तुदा तदा देवी तामसी तत्रवेधसा॥८९॥

---

की रचना करी है और जो संसार का पालन व संहार करता है ॥८३॥ उस भगवान विष्णु को आपने निद्रावश कर लिया है, तब और कौन व्यक्ति आप की स्तुति कर सकता है ।। जब आपने विष्णु भगवान ईशान ( महादेव ) तथा मुझ (ब्रह्मा) से शरीर ग्रहण करा लिया है ॥८५॥ फिर कौन मनुष्य व देवता आपकी स्तुति करने का ताक़त कर सकता है ? सो हे देवि ! इस तरह अपने उदार स्वभाव का वर्णन सुन प्रसन्न हो इन दुष्ट दुराधर्ष मधु और कैटभ नाम के राक्षसों को मोहित कर ॥ जगत्स्वामी विष्णु को जगाओ ॥८६॥ तथा इन दोनों राक्षसों के संहार के लिये भगवान् अच्युत को जल्दी से जगाओ ॥८७॥ ऋषि ने कहा—॥८८॥ उन दोनों मधु और कैटभ राक्षसों को नाश कराने के विचार से विष्णु भगवान को जगाने की इच्छा रखने वाले ब्रह्माजा जब इस प्रकार उस तमोगुणी निद्रारूप देवी की स्तुति कर चुके ॥८९॥ तब अव्यक्त जन्मा ब्रह्मा के सामने

विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ ।। नेत्रास्य
नासिकाबाहुहृदयेभ्यस्तथोरसः ।। ६० ।। निर्गम्य
दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ।। उत्तस्थौ च
जगन्नाथस्तयामुक्तो जनार्दनः ।।६१।। एकार्णवेऽहि-
शयनात्ततः स ददृशे च तौ ।। मधुकैटभौ दुरात्मा-
नावतिवीर्यपराक्रमौ ।। ६२ ।। क्रोधरक्तेक्षणावत्तुं
ब्रह्माणं जनितोद्यमौ ।। समुत्थाय ततस्ताभ्यां युयुधे
भगवान् हरिः ।।६३।। पञ्चवर्षसहस्राणि बाहुप्रहरणो
विभुः ।। तावप्यतिबलोन्मत्तौ महामायाविमोहितौ
।।६४।। उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केश-
वम् ।।६५।। भगवानुवाच ।। ६६ ।। भवेतामद्य मे

---

भगवान विष्णु के मुँह, आँख, नाक, बाहू, मन तथा हृदय से निकल कर योगमाया भगवती देवी ने खड़े हो ब्रह्मा को दर्शन दिया ।।६०।। तदनन्तर योग निद्रा से छुटने पर भगवान विष्णु ने एकार्णवस्थित (केवल जलका समुद्र) शेषजी की शय्या से उठ कर अवलोकन किया ।।६१।। और वही दोनों दुरात्मा अत्यन्त वीर्य पराक्रमशाली मधु-कैटभ क्रोध से लाल नेत्र करके ब्रह्मा को मारने के लिये तयार हैं ।।६२।। तदनन्तर भगवान विष्णु ने उठकर उन दोनों के साथ ५ हज़ार वर्ष तक मल्लयुद्ध (कुश्ती) किया ।।६३।। जब वे दोनों बल वाले उन्मत्त राक्षस उस जगदम्बा की कृपा से मोहित होकर कहने लगे ।।६४।। हे केशव ! "तुम हम दोनों से वर माँगो ।।६५।।" भगवान बोले—।।६६।। यदि तुम दोनों मुझ



तुष्टौ मम वध्यावुभावपि ।।९७।। किमन्येन वरेणात्र एतावद्धि वृतं मम ।।९८।। ऋषिरुवाच ।। ९९ ।। वञ्चिताभ्यामिति तदा सर्वमापोमयं जगत् ।।१००।। विलोक्य ताभ्यां गदितो भगवान्कमलेक्षणः ।। आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ।।१०१।। ऋषिरुवाच ।। १०२ ।। तथेत्युक्त्वा भगवता शंख-चक्रगदाभृता ।। कृत्वा चक्रेण वै च्छिन्ने जघने शिरसी तयोः ।।१०३।। एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयम् ।। प्रभावमस्या देव्यास्तु भूयः शृणु वदामि ते ऐं ॐ ।। १०४ ।। इति श्री मार्कण्डेय पुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये मधुकैटभ-

---

से खुश हुए हो, तो तुम दोनों मेरे द्वारा मारे जाओ ।।९७।। मैं यही चाहता हूँ ! इस जगह और वर से क्या लाभ ।।९८।। ऋषि ने कहा--।।९९।। जब भगवान विष्णु ने इस प्रकार दोनों को ठग लिया ।।१००।। तब उन दोनों राक्षसों ने सम्पूर्ण जगत को पानी से डूबा देखकर भगवान पुण्डरीकाक्ष से कहा ।। हम दोनों को उस स्थान में मारो ।। जहाँ पानी से पृथ्वी डूबी न हो, हम दोनों तुम से प्रसन्न हैं ।।१०१।। ऋषि ने फिर कहा---।।१०२।। भगवान ने कहा "ऐसा ही होगा" इतना कह कर शङ्ख, चक्र, गदाधारी भगवान ने उन दोनों राक्षसों के शिर अपनी जाँघ पर रखकर चक्र से काट दिये ।।१०३।। यह महामाया जगदम्बा इसी प्रकार से पैदा हुई थी ।। और स्वयं ब्रह्माजी ने उसकी स्तुति करी

बधः प्रथमोध्यायः ॥ १ ॥ उवाच १४ अर्द्ध २४ श्लोक ६६ ॥ एवं १०४ ॥

इति शब्दो हरेल्लक्ष्मीं बधः कुल विनाशकः। अध्यायो हरते प्राणान्मार्कण्डेयादिकं वदेत ॥

थी आगे श्री देवीजी का वृत्तान्त तुमसे कहता हूं सो सुनो ॥

इति आगरा निवासी श्री घनश्याम गोस्वामी कृत भाषा मधु कैटभ बध की कथा समाप्त हुई ॥

---

अध्याय के अन्त में इति बोलने से लक्ष्मी का नाश होता है बधः बोलने से कुल का नाश होता है अध्याय बोलने से अपने प्राण नाश होते हैं इसलिये अध्याय के बाद आचमनी में जल लेकर

ॐ जय जय मार्कण्डेय पुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये सत्याः सन्तु ( यजमानस्यकामः ) जगदम्बार्पणमस्तु । ऐसा बोलकर जल छोड़ना ।।

तान्त्रिक आहुति, ॐ साङ्गायै सायुधायै सशक्तिकायै सपरिवारायै सवाहनायै ऐं बीजाधिष्ठात्र्यैमहाकालिकायै महाहुतिं समर्पयामि नमः ।। इतना कहकर आहुति छोड़ना सामान नीचे लिखा हुआ है ।

---

वैदिक आहुति अध्याय की

एक उलटे साबत पान पर शाकल्य घी में भिगोकर १ कमल गट्टा १ सुपारी २ लौंग, १ छोटी इलायची गूगल शहत यह सब चीजें स्रुची में रखकर खड़े होकर मन्त्र बोलना ।। ॐ प्राणाय स्वाहा, पानाय स्वाहा व्यानाय स्वाहा ।। अम्बेऽअम्बिकेऽम्बालिके नमानयति कश्चन ।। ससस्त्यश्वकः सुभद्रिं कां कां पीलवासिनीꣳस्वाहा ।।२२।२३।। बाद में स्रुवे से ५ बार घी छोड़ते हुए इस मन्त्र को बोलना ।।

ॐ घृतं घृतपावानः पिबतव्वसां वसा पावानः ।। पिबतांत-रिक्षस्यहविरसिस्वाहा ।। दिशः प्रतिशऽआदिशोव्विदिशऽउद्दिशो दिग्भ्यः स्वाहा ।। यजु० सं० अ० ६।१९ मंत्र ।।

# ॥ अथ द्वितीय अध्यायः ॥

ॐ मध्यमचरित्रस्य विष्णुर्ऋषिः महालक्ष्मीर्देवता उष्णिक्छन्दः शाकम्भरीशक्तिः दुर्गाबीजं वायुस्तत्त्वं यजुर्वेदमूर्तिः आत्मनोभीष्ट फल प्राप्ति हेतवे धर्म्मार्थ काम कामोत्तार्थे पाठे (हवने) विनियोगः ॥२॥

मध्यम चरित्र के विष्णु ऋषि, महालक्ष्मी देवता, उष्णिग्छन्द, शाकम्भरीशक्ति, दुर्गाबीज, वायुतत्व तथा यजुर्वेद के समान मूर्ति है और महालक्ष्मी के प्रीत्यर्थ विनियोग है इतना कह कर जल छोड़ना ॥

विनियोग बोलकर जल छोड़ना ध्यान का अर्थ नीचे देखना।

## महालक्ष्मी ध्यानम् ॥

ॐ अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुष्कुण्डिकां दण्डं शक्तिमसिञ्चचर्मजलजं घण्टां सुराभाजनम् ॥ शूलं पाश सुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सुरौजोद्भवाम् ॥२॥

॥ ध्यान का अर्थ ॥

रुद्राक्ष की माला, फरसा, गदा, बाण, वज्र, कमल, धनुष, कमंडलु, दंड, शक्ति, तरवार, ढाल, शंख, घंटा, सुरापात्र, त्रिशूल, फांसी और सुदर्शन चक्र, इनको १८ हाथों में लिए हुए मूंगे के समान शरीर की कान्ति वाली जो सब देवताओं के तेज से उत्पन्न है ऐसी महालक्ष्मी का ध्यान करता हूँ ॥

अक्षमाला, परशु, गदा, बाण, वज्र, पद्म, धनुः, कुण्डिका, दण्ड, शक्ति, असि, चर्म, जलज, घण्टा, सुराभाजन, शूल,

बुद्धिमाँश्च बृहस्पतिः ॥ यद्धृत्वा भगवाञ्छुक्रः सर्वदैत्येषु पूजितः ॥ ४ ॥ पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मिको मुनिः । ५ ॥ स्वायम्भुवो मनुश्चैव यद्धृत्वा सर्वपूजितः ॥ कणादो गौतमः कण्वः पाणिनिः शाकटायनः ॥ ६ ॥ ग्रंथं चकार यद्धृत्वा दत्तः कात्यायनः स्वयम् ॥ धृत्वा वेदविभागं च पुराणान्यखिलानि च ॥७॥ चकार लीलामात्रेणकृष्णद्वैपायनः स्वयम् ॥ शातातपश्च संवर्त्तो वसिष्ठश्च पराशरः ॥ ८ ॥ यद्धृत्वा पठनाद् ग्रन्थं याज्ञवल्क्यश्चकार सः ॥ ऋष्यशृङ्गो भरद्वाजश्चास्तीको देवलस्तथा ॥९॥ जैगीषव्योऽथ जावालिर्यद्धृत्वा सर्वपूजितः ॥ कवचस्यास्य विप्रेन्द्र ऋषिरेष प्रजापतिः ॥ १० ॥ स्वयंबृहस्पतिश्छन्दो देवो रासेश्वरः प्रभुः ॥ सर्वतत्त्व परिज्ञानसर्वार्थसाधनेषु च ॥ ११ ॥ कवितासु च सर्वासु विनियोगः प्रकीर्तितः ॥ ॐ ह्रीं सरस्वत्यै स्वाहा शिरो मे पातु सर्वतः ॥ १२ ॥ श्रींवाग्देवतायै स्वाहा भालं मे सर्वदावतु ॥ ॐ सरस्वत्यै स्वाहेति श्रोत्रं पातु निरन्तरम् ॥ १३ ॥ ॐ श्रीं ह्रीं भारत्यै स्वाहा नेत्रयुग्मं सदावतु ॥ ॐ ह्रीं वाग्वादिन्यै स्वाहा नासां मे सर्वतोऽवतु ॥ १४ ॥ ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा ओष्ठं सदावतु ॥ ॐ श्रीं ह्रीं ब्राह्म्यै स्वाहेति दन्तपङ्क्तीः सदावतु ॥१५॥ ऐमित्येकाक्षरो मन्त्रो मम कण्ठं सदावतु ॥ ॐ श्रीं ह्रीं पातु मे ग्रीवां स्कन्धं मे श्री सदावतु ॥१६॥ श्रींविद्याधिष्ठातृ देव्यै स्वाहा वक्षः सदावतु ॥ ॐ ह्रींविद्यास्वरूपायै स्वाहा मे पातु नाभिकाम् ॥ १७ ॥ ॐ ह्रीं ह्रींवाण्यै स्वाहेति मम पृष्ठं सदावतु । ॐ सर्ववर्णात्मिकायै पद-युग्मं सदावतु ॥१८॥ ॐ रागाधिष्ठातृदेव्यै सर्वाङ्गं मे सदावतु ॥ ॐ सर्वकण्ठवासिन्यै स्वाहा प्राच्यां सदावतु ॥ १९ ॥ ॐ ह्रीं जिह्वाग्रवासिन्यै स्वाहाऽग्निदिशि रक्षतु ॥ ॐ ऐं ह्रीं श्रीं सरस्वत्यै बुधजनन्यै स्वाहा ॥२०॥ सततं मन्त्रराजोऽयं दक्षिणे मां सदावतु ॥ ॐ ह्रीं श्रींत्र्यक्षरो मन्त्रो नैर्ऋत्यां मे सदावतु ॥२१॥ कविजिह्वाग्र वासिन्यै स्वाहा मां वारुणेऽवतु ॥ ॐ सदाम्बिकायै स्वाहा वायव्ये मां सदावतु ॥२२॥ ॐ गद्यपद्यवासिन्यै स्वाहा मामुत्तरेऽवतु ॥ ॐ सर्वशास्त्रवासिन्यै स्वाहैशान्यां सदावतु ॥२३॥

ॐ ह्रीं सर्वपूजितायै स्वाहा चोर्ध्वं सदावतु ॥ ॐ ऐं ह्रीं पुस्तकवासिन्यै स्वाहाधो मां सदावतु ॥ २४ ॥ ॐ ग्रन्थबीजस्वरूपायैस्वाहा मां सर्वतोऽवतु ॥ इति ते कथितं विप्र सर्वमन्त्रौघविग्रहम् ॥२५। इदं विश्वजयं नाम कवचं ब्रह्मरूपिणम् ॥२६॥ पुराश्रुतं धर्म वक्त्रात् पर्वते गन्धमादने ॥ तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्यचित् ॥२७॥ गुरुमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः ॥ प्रणमेद्दण्डवद् भूमौ कवचं धारयेत्सुधीः ॥ २८ ॥ पञ्चलक्षजपेनैव सिद्धं तु कवचं भवेत् ॥ यदि स्यात् सिद्धकवचो बृहस्पतिसमो भवेत् ॥२९॥ महावाग्मी कवीन्द्रश्च त्रैलोक्यविजयी भवेत् ॥ शक्नोति सर्वं जेतुं स कवचस्य प्रसादतः ॥ ३० ॥ इति ते काण्वशाखोक्तं कथितं कवचं मुने ॥ स्तोत्रं पूजाविधानं च ध्यानं च वन्दनं तथा ॥ ३१ ॥ इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायणनारदसंवादे सरस्वतीकवचं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# नवार्ण भेदाः

ओं ऐं ह्रीं क्लीं लृं श्रीं ह्रीं क्लीं नमः ॥ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ॥ हूँ ऐं ऐं ह्रीं चामुण्डायै स्वाहा इति डामरोक्तः ॥ ओं ऐं ह्रीं क्लीं लृं ह्रीं नमः इति दाक्षिणात्याः ॥ हूँ ऐं ऐं ह्रीं चामुण्डायै स्वाहा इति सारस्वताः ॥ देव्यथर्व शिरोनुयायिनो डामर तंत्रानुयायिनश्चशिष्टाः ॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे इत्येव प्रमाणयन्ति एवमुक्त प्रमाणेन जीवनादयोपि बोध्याः ॥ महिमातिशयोर्थश्च विधानञ्च विपश्चिताः ॥ मन्त्रं जिज्ञासमानेन वेदितव्यंपदेपदे ॥ इति यजुर्वेद भाष्यस्थित स्मृतेस्तदपेक्षायामेवतन्मन्त्र महिमातिशयोर्थश्च डामरतन्त्रोक्तो निरूप्यते ॥

चतुर्वर्ग समुद्भूतं चतुर्वर्ग फलप्रदम् ॥
चतुर्वर्ण चतुर्वर्णं शंकरं शांकरिं भजे ॥

अथ प्रयोगान्तराणि कात्यायनी तन्त्रोक्तानि ॥

प्रति श्लोक माद्यन्तयोर्मंत्रंजपेन्मंत्र सिद्धिः मंत्रमित्यत्र प्रणव-

मित्युक्तः ॥ नागेशभट्टैः सप्रणव-मनुलोम व्याहृति त्रयमादौ अन्तेतु-विलोमं तदित्येवं प्रतिश्लोकं कृत्वा शतावृत्ति पाठे अति शीघ्रं सिद्धिः ॥ प्रति श्लोकमादौ ॥ ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः सनः पर्षदति दुर्गाणि विश्वानावेवसिन्धुन्दुरितात्यग्निः इत्यृचं पठेत्सर्व काम सिद्धिः ॥ अपमृत्युवारणायादावन्ते त्र्यम्बक मंत्रंजपेत् प्रति-श्लोकं तन्म-न्त्रजप इति वा ॥ प्रतिश्लोकं शरणागतदीनार्त्तेति श्लोकं पठेत् सर्व कार्य्य सिद्धिः । अन्येतु शरणागत रुद्धेत्याहुः ॥ सर्वमङ्गलावाप्त्यै सर्व मंगल मंगल्ये इति प्रति मन्त्र पठेदिति कालिका पुराणेस्थितं ॥ प्रतिश्लोकं करो-तुसानः शुभेत्यर्द्धंपठेत्सर्व कामावाप्तिः ॥ स्वाभीष्ट वरप्राप्त्यै एवं देव्या वरमिति श्लोकं प्रतिश्लोकं पठेत् इतिदत्वेत्यर्द्ध श्लोकात्मको मन्त्रो जपा-द्वाञ्छितार्थद इत्यन्ये ॥ सर्वापन्निवारणाय दारिद्र-दूरीकरणाय च प्रति श्लोकं दुर्गेस्मृतेति पठेत् अस्य केवलस्यापि श्लोकस्य कार्य्यानुसारेण लक्ष-मयुतं सहस्रं शतं वा जपः ॥सर्वाबाधेत्यस्य लक्ष जपे श्लोकोक्तं फलम् ॥ नारायणस्तुसमन्वित इत्यत्र सुतान्वित इत्यपि पाठात्तेन सुत प्रदोप्ययं मन्त्रइति तदाशयोलक्ष्यते ॥ इत्थं यदायदेति श्लोकस्य लक्ष जपे महामारी शान्तिः ॥ ततो वव्रे नृपोराज्यमिति मन्त्रस्य लक्षजपे पुनः स्वराज्यलाभः॥ स्वल्पै रहोभिरिति मन्त्रस्य लक्ष जपे प्रति मन्त्र पाठे वा स्वराज्य लाभ इति बहवः ॥ हिनस्ति दैत्य तेजांसीत्यनेन सदीप दाने घण्टा वादने च बालग्रह-शान्तिः। घण्टा-वादन इत्यत्रनागेश भट्टादयो घण्टा-बन्धन इत्याहुः ॥ घण्टां कांस्य-मयीं बध्वा माष भक्त बलिं हरेदिति वचनात् ॥ मन्त्रमुच्चार्य्य तद्घण्टानादं कुर्य्याद्विचक्षण ॥ तन्नाद-श्रवणाद्देविपला-यन्ते पिशाचका इति पूर्वापर वैलक्षण्येपि वादनार्थमेव तद्बन्धनमित्युभ-योरेकमेव प्रयोजनं समर्थप्रति तद्वादनमिति वा प्रयोजनैक्यं बोध्यम् ॥ आद्यावृत्तिमनुलोमेन त्रयोदशाध्यायं पठित्वा ततोविपरीत क्रमेण द्वितीयां कृत्वा पुनरनुलोमेन तृतीयामित्येवमावृत्तित्रये उक्तेषु प्रकारेषु शीघ्रं कार्य्य सिद्धिः, सर्वापत्ति निवारणाय दुर्गेस्मृतेत्यर्द्धं ततो वदन्ति

यश्चदूर के भयं विन्दतिमामिह पवमान वितज्जहि इत्यृचंतदन्तेद्यारिद्र्य दुःखेत्यर्द्धमेवं कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः ॥ कांसोस्मि-तांहिरण्य प्राकारामार्द्रां ज्वलंतीतृप्तां तर्पयन्तीं पद्मेस्थितां पद्मवर्णां-तामिहोपह्वये श्रियमित्यृचं प्रतिश्लोकं पठेल्लक्ष्मी-प्राप्तिः ॥ प्रतिश्लोकं अनृणा अस्मिन्ननृणाः परस्मिन्तृतीयेलोके अनृणाःस्याम ये देवयानाः पितृयाणाश्च लोकाः सर्वान्पथो अनृणाआक्षियेमेत्यृचं पठेत् ऋणपरि-हारः ॥ मारणार्थमेव मुक्ता समुत्पत्स्येति श्लोकं पठेन्मारणोक्तावृत्तिभिः फल सिद्धिः ॥ सर्वाबाधा प्रशमन मिति मंत्रोयं शत्रु नाशक आपन्नाश-करच ॥ ज्ञानिनामपि चेतांसीति श्लोकस्य जपमात्रेण सद्यो मोहन मित्यनु-भव सिद्धम् ॥ तच्छ्लोक पाठे त्ववश्यम् ॥ रोगानशेषा निति श्लोकस्य-प्रति श्लोके पाठे सकल रोग नाशः तन्मन्त्र जपेपि सः ॥ इत्युक्ता सातदा देवी गम्भी रेति श्लोकस्य प्रतिश्लोकं पाठे पृथग्जपे वा विद्या प्राप्तिर्वाग्वि-कार नाशश्च ॥ मेधे सरस्वति वरे इत्ययमपि विद्याप्रद इत्यन्ये ॥ भग-वत्या कृतं सर्वमित्यादि द्वादशोत्तरं शताक्षरो मन्त्रः सर्वकामदः सर्वा पन्नि-वारणश्च होमेतु अर्द्धमेवेति पूर्व- मुक्तम् ॥ देवि प्रपन्नार्ति हरे प्रसीदेति श्लोकस्य यथा कार्य्यं लक्षमयुतं शतं वा जपे प्रति श्लोकं पाठे वा सर्वा-पन्निवृत्तिः सर्वकामाप्तिश्च ॥ इयुक्ता सा भगवती त्यर्द्ध मन्त्रोयं जपात् शौर्य्य प्रदायकः ॥ देवि प्रसीदेति मंत्रस्य जपे पाठे वा शत्रु पापोपसर्ग नाशः ॥ वञ्चिताभ्यामित्यर्द्ध मन्त्रो जल प्रद इति हरगौरी तंत्रात् ॥ महां ॥२॥ इन्द्रोपऽॐजसा पर्ज्जन्यो वृष्टिमा हुवस्तो भैर्व्वत्सस्य वावृधेऽउपया मगृहीतोसि महेन्द्रायत्वैपते योनिर्म्महेन्द्रायत्वेपि जल प्रद इति याज्ञ ॥ अतिवृष्टि शान्तये ॐसमुद्रं गच्छ स्वाहान्तरिक्षङ्गच्छस्वाहादेवंᳪसवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा हो रात्रेगच्छ स्वाहा छन्दाᳪसि गच्छ स्वाहाद्यावा पृथिवी गच्छ स्वाहायज्ञं गच्छ स्वाहा सोमंगच्छ स्वाहा दिव्यंनभोगच्छाग्निं वैश्वानरं गच्छ स्वाहा मनोमेहार्दियच्छदिवन्तेधूमो-गच्छतुस्वर्ज्योतिः पृथिवीम्भस्मना पृणस्वाहेतिजपेत् ॥ यत्राथर्वस्तवा-

भूपेत्येकेनैवश्लोकेनासकृदावर्तितेन देवीतोषकृद्भवति ॥ शंख चक्र गदा-शार्ङ्ग गृहीतपरमायुधे इत्ययमप्येतत्फलदमित्यन्ये॥ स्त्रियः सौभाग्यकामनयावियुक्तपतिप्राप्तयेच अम्बेऽअम्बिकेम्बालिकेनसानयति कश्चन ससस्त्यश्वकः सुभद्रिकां कांपीलवासिनीमितिमन्त्रं।प्रतिमन्त्रं च पठेत् ॥ सर्वत्रसंपुटीकृत्य पल्लवीकृत्य वा पठेत् ॥ मन्त्रान्कांश्चिज्जपेदेवक्रम एष शिवोदित इति एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवल-मेव वा नमस्कार-करणेत्ति शीघ्रं सिद्धिः ॥ इति कात्यायनी तन्त्रोक्त प्रयोग विधिः समाप्ता ॥ इत्यर्गलपुर निवासि गौड़ जातीय भारद्वाज वंशोद्भवविद्वद्वर गोस्वाम्युपाह्व पं० बुलाखीराम सूनुना श्री विद्याधर्मवर्द्धिनी पाठशालायाः कर्मकाण्ड यजुर्वेदाध्यापकेन विद्याभूषण कर्म काण्डमणीत्युपाधि विभूषितेन श्री लक्ष्मीनारायण गोस्वामिना संग्रहीता "दुर्गार्चन स्मृतिः" समाप्ता ॥

---

# ॥ विजया दशम्यां शमी पूजनम् ॥

अथ विजया-दशम्यां वर्ष पर्यन्तं यात्रा निर्विघ्न प्राप्तये शमी पूजनम् ॥

शमी पूजने कालः ॥ ज्योतिर्निबंधे ॥ ईषत्संध्यामति क्रान्तः किंचिदुद्भिन्नतारकाः ॥ विजयोनामकालोयं सर्वकामार्थ साधकः ॥ नगराद्ग्रामाद्वावहिरीशाकोणे शमी वृक्ष समीपं गत्वा ॥ भूमिं प्रोदयतस्योपरि श्वेत वस्त्रं प्रसार्य तदुपरि तन्दुलेनाष्टदलं कृत्वा मध्ये कलशं स्थाप्य ॥

आचम्य प्राणानायम्य स्वस्तिवाचन पूर्वकं संकल्पं विधाय । गणेश पंचोंकार षोडशमातृका नवग्रह कलशादीन्प्रपूजयेत् । ततः शमी मूलाद्भूमिमुत्कृत्य श्वेततन्दुल पूग स्वर्ण तारं वा धृत्वा परिक्रम्य ततः शमीपत्राणि सह गोलकं बध्वा सर्वकार्यसिद्ध्यर्थं पूजांते गृह्णाति ॥

संकल्पः । तिथि वाराद्युच्चार्य ॥ यात्रायां विजय सिद्ध्यर्थं वास्तु पूजन दिग्पाल पूजन मार्ग देवता पूजन शमी पूजन अपराजिता पूजनञ्च करिष्ये ॥ ॐ अपराजितयै नमः ॥ दक्षिणे ॐ क्रियायैनमः । वामे ॐ उमायैनमः ॥ पश्चात् शमीं ध्यायेत् ॥



अमंगलानांशमनीं शमनींदुष्कृतस्य च ॥ दुःस्वप्ननाशिनीं धन्यां प्रपद्येहंशमींशुभाम् ।। शमी देवतायै नमः ।। इति मंत्रेण यथोपचारैः शमी वृक्षं पूजयेत् ।। ततः प्रार्थना ॥ भविष्ये ॥ शमीशमय मे पापं शमी लोहित कंटका ॥ धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥ करिष्यमाणयात्रायां यथा कालं सुखं मया ॥ तत्र निर्विघ्नकर्त्रीत्वं भव श्रीरामपूजिता ।। शमीशमय मे पापं शमी शत्रु विनाशिनी ॥ अर्जुनस्य धनुर्धारी रामस्य प्रियवादिनी ॥ इति प्रार्थना ॥ धारामंत्रः ॥ आलिंगिता मयादेवि सदा शान्तिं प्रयच्छ मे ॥ इति शमीमूले धारां दद्यात् पूजन कर्मणि ॥ उत्तरे कर्मण्यविघ्नमस्तु ॥ आपोहिष्ठेति अभिषेकः ॥ मांगल्यं ॥ आशिषः॥ अनया पूजया शमी देवताः प्रीयताम् ॥

यात्रा काले चाष दर्शनं शुभम् ॥

नीलकंठो मणिग्रीवः स्वस्तिकश्चापराजितः अशोकश्चा विशोकश्च नंदनः पुष्टिवर्द्धनः ॥ अष्टौ चापस्यनामानि चाषं दृष्ट्वा तु यो पठेत् ॥ कार्यसिद्धिर्भवेत्तस्य मिष्टमन्नं वरांगना ॥ अभिलाषादोग्ध्र्यै शम्यैनमः ॥ पूर्वस्यांदिशि यानि कार्याणि तत्सिद्धये प्रयाणमारंभयामि ॥ ॐ या यात्रा शंकरस्य त्रिपुरविदहने खांडवेचार्जुनस्य, यायात्रा राघवस्य जलनिधि तरणे सेतु बंधे समुद्रे ॥ यायात्रा वायुसूनोरौषधि गमने लक्ष्मणे शक्तिभिन्ने सायात्रा सिद्धिदात्री भवतु ममगृहे सर्व सौख्य प्रदात्री ॥ शत्रु प्रतिमा कार्यास्तंडुलैः सर्वदिक्षु च ॥ पद चतुष्टयं वा दश गत्वा ॥ १त्रातारमिन्द्रेति इन्द्रायनमः ॥ दुग्धधारा दीपादिना पूजयेत् ॥ पुनः तन्दुल रचित शत्रु प्रतिमोपरिपादं धृत्वा ॥ पश्चाच्छमीमूलमागत्य ॥ अभिलाष दोग्ध्र्यै शम्यैनमः ॥ सनाभिलषित कार्यसिद्ध्यर्थंदक्षिणस्यां दिशि प्रयाणमारंभयामि ।' ॐ यायात्रेत्यादि पठित्वा ।। पद चतुष्टयं दश वा गत्वा ॥ २ॐ यमायत्वेति मंत्रेण ॐ यमाय नमः नाम मंत्रेण वा दुग्धधारा दीपादिना पूजयेत् ।। ततः चित्तस्थः कार्य सिद्ध्यर्थं प्रतीच्यांदिशि प्रयाणमारंभयामि ॥ दुग्धधारादीपादिना पूजयेत् ॥ शमी मूलमा-

गत्य ।। पुनरभिलाष दोग्ध्र्यै शम्यैनमः यायात्रेत्यादि पठित्वा ।। पदचतुष्टयं दश वा गत्वा ।। ३ॐ वरुणस्योत्तममिति मंत्रेण वरुणाय नमः इति मंत्रेण वा वरुणं दुग्धधारा दीपादिना पूजयेत् ।। शमी मूल मागत्य ।। अभिलाष दोग्ध्र्यै शम्यै नमः ।। ततः उत्तरस्यां दिशि यानि कार्याणि सर्वार्थ साधनार्थं प्रयाणमारंभयामि ।। ॐ यायात्रेत्यादिपठित्वा ।। पद चतुष्टयं दश वा गत्वा ।। ४ॐ वयर्ठ०सोमव्रतेति मंत्रेण ॐ सोमाय नम इतिमंत्रेण वा दुग्धधारा दीपादिना पूजयेत् ।। ततः शमीमूले आगत्य मृत्तिकां शमी पत्राणि च संगृह्य तथा चोक्तं मत्स्य पुराणे ।। पूजान्तेमृत्तिका ग्राह्या आग्राह्या शमीमूलकात् ।। तस्माच्छमी प्रसादेन सुवर्णं चोपपद्यते ।। तत्रमंत्रः ।। ॐअग्ने अच्छाव्वदेहिनः प्रतिनः सुमनाभव ।। प्रनोयच्छ सहस्र जितर्ठ०हि धनदाऽअसि स्वाहा ।।

---

१ ॐ त्रातारमिन्द्रमवितारमिन्द्रर्ठ० हवेहवेसुहवर्ठ० शूरमिन्द्रम् ।। ह्वयामिशक्रं पुरुहूतमिन्द्र र्ठ० स्वस्तिनो मघवाधात्विन्द्रः ।।

२ ॐ यमायत्वामखायत्वा सूर्यस्यत्वा तपसे ।। देवस्त्वा सविता-मद्ध्वानक्तुपृथिव्याः सर्ठ० स्पृशस्पाहि ।। अर्चिरसि शोचिरसितपोसि ।।

३ ॐ वरुणस्योत्तं भनमसि वरुणस्यस्कंभसर्जनीस्थोवरुणस्यऽऋ-त सदन्यसि वरुणस्यऽऋत सदनमसि वरुणस्यऽऋतसदनमासीद ।।

४ वयर्ठ० सोमव्रतेतवमनस्तनूषु विभ्रतः ।। प्रजावन्तः सचेमहि ।।

## ।। खञ्जरीट प्रार्थना ।।

नील ग्रीव शुभ ग्रीव सर्वकाम फलप्रदः ।। पृथिव्यामवतीर्णोसि खंजरीट नमोस्तु ते ।। त्वं योगयुक्तो मुनिपुत्र कस्त्वमदृश्यतामेपि शिखोद्-गमेन ।। संदृश्यसे प्रावृषि निर्गतायां त्वं खंजनाश्चर्य नमो नमस्ते ।।

## ।। खंजरीट दर्शन फलं प्रति दिशायां ।।

अब्जेषु गोषु गज वाजि महोरगेषु राज्यप्रदः कुशलदः शुचि शाद्वलेषु ।। भस्मास्थिकेश नखलोमतुषेषु दृष्टो दुःखं ददाति बहुशः खलु खंजरीट ।।

वित्तं ब्रह्मणि कार्यसिद्धिरतुला शक्रेहुताशे भयं याम्यामग्नि भयं सुरद्विषि कलिर्लभिः समुद्रालये ॥ वायव्यां वर वस्त्र गन्धसलिलं दिव्यांगना चोत्तरे ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने ॥

कैश्चिद्दक्षैस्तत्र भाव्यं कैश्चिद्भाव्यं तु वानरैः ।
कैश्चिद्रक्तमुखैर्भाव्यं कोसलेन्द्रस्य तुष्टये ॥
निर्जिता राक्षसा दैत्या वैरिणो जगती तले ।
राम राज्यं राम राज्यं राम राज्य मिति ब्रुवन् ॥ १ ॥

शमीपूजन सामग्री ॥

श्रीफल, रोली, मौली, चावल, पान, सुपारी, दीपक, धूप, रुई, दियासलाई, गाढ़ा, एलायची, लौंग, नैवेद्य, ऋतुफल, दूध कच्चा, कलश, अनार की कलम १० अंगुल, दक्षिणा, मटकेने आसन स्वर्ण, चांदी ॥

इति शमी पूजन विधिः समाप्तः ॥

---

रुद्रकल्पे वरणद्रव्याणि ॥

भोजनं भोजनाधारछत्रोपानत्कमण्डलु ।
आसनं वसनं मुद्राकर्णभूषोपवीतकम् ॥
एतद्दशविधं देयं पदं वरण सिद्धये ।
पदाभावेत्रयं देयं पात्र वस्त्रांगुलीयकम् ॥ १ ॥

अथ छायापात्रदान विधिः ॥

कांस्यपात्रे स्थिताज्यं च आत्मरूपं निरीक्ष्य तु ॥
ससुवर्णन्तु यो दद्यात्सर्वविघ्नोपशान्तये ॥

मन्त्रः ॥ ॐ रूपरू० रूपं प्रतिरूपो बभूवतदस्य रूपं प्रतिचक्षणाय ॥ इन्द्रोमायाभिः पुरुरूपऽएते युक्ताह्यस्य हरयः शतादशेत्ययंवै हरयोयं दशच सहस्राणि बहूनि च नन्तातदेतद्ब्रह्मपूर्वमनवाह्य जमनुः सर्वानुशासनम् ॥ इत्याज्ये मुखमवलोक्य ॥ संकल्पः ॥ अद्येत्यादि० ममैतच्छरीरावच्छिन्न समस्तपापक्षय सर्वग्रहपीडाशान्ति शरीरोत्थार्त्तिनाशाय प्रासाद बांछा-

युरारोग्यादिसर्व सौभाग्यप्राप्तये सर्वसौख्यप्राप्तये च इदं स्वदेह छायावीक्षिताज्य पूरितकांस्य पात्रं ससुवर्णं ( सदक्षिणाकं ) विष्णु दैवतं अमुक गोत्राय अमुकशर्मणे ब्राह्मणाय सुपूजिताय तुभ्यमहं संप्रदते नमम ॥

मन्त्रौ ॥

याऽलक्ष्मीर्यच्चमे दौस्थ्यंसर्वाङ्ग समुपस्थितम् ॥
तत्सर्वं नाशयाज्यत्वं श्रियमायुश्च वर्द्धय ॥ १ ॥
आज्यंसुराणामाहारः सर्वमाज्ये प्रतिष्ठितम् ॥
आज्यपात्र प्रदानेन शान्तिरस्तु सदाभम ॥ २ ॥

इति छायादान विधिः ॥

अथ क्षेत्रपाल बलिदान विधिः ॥

एकस्मिन्वंश पात्रे कुशानास्तीर्य तदुपरि आहार चतुर्गुणं द्विगुणं वा माषभक्त दध्योदनं जलपात्रं च निधाय हरिद्रा कुंकुम सिन्दूर कज्जल द्रव्यपताका दीपयुतं कृत्वा ॥ ॐ अद्येत्यादि० सकलारिष्ट शान्तिपूर्वकं प्रारिप्सितस्य कर्मणः सांगतासिद्ध्यर्थं क्षेत्रपाल पूजनं बलिदानं च करिष्ये ॥ इति प्रतिज्ञा ॥ अक्षतान्गृहीत्वा ॥ ॐ नहिस्पृशमविदस्वन्यमस्माद्वैश्वा नरापुर एतारमग्नेः ॥ एमेनवृधन्न मृताऽअमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः ॥ ॐ ह्रीं (क्षं) क्षेत्रपालाय नमः ॥ इति मन्त्रेण यथोपचारैः सम्पूज्य ध्यायेत् ॥

ॐ नीलाञ्जनाद्रि निभमूर्ध्व पिशंगकेशम् ।
वृत्तोग्रलोचन मुदान्तगदाकपालम् ॥
आशाम्बरं भुजगभूषणमुग्र दंष्ट्रं ।
क्षेत्रेशमद्भुत तनुं प्रणमामिदेवम् ॥

प्रार्थना ॥

ॐ नमो क्षेत्रपालस्त्वं भूतप्रेतगणैः सह ।
पूजाबलिंगृहाणेमं सौम्योभवतु सर्वदा ॥

आयुरारोग्यंमे देहि निर्विघ्नंकुरु सर्वदा ॥
अनेन पूजनेन क्षेत्रपालः प्रीयताम् ॥

ततोवलिदानम् ॥

ॐ क्षेत्रपाल महाबाहो महाबल पराक्रम ॥
क्षेत्राणां रक्षणार्थाय बलिंगृह्ण नमोस्तु ते ॥

क्षं क्षेत्रपालाय सांगाय भूतप्रेत पिशाच डाकिनी शाकिनी वेतालादि परिवारयुताय सायुधाय सशक्तिकाय सवाहनाय इमंसदीप दधिमाषभक्त बलिंसमर्पयामि नमः भो भोः क्षेत्रपाल सर्वतोदिशं रक्ष बलिंभक्ष दीपं पश्य मम ( यजमानस्य ) सकुटुम्बस्य अभ्युदयं कुरु आयुः कर्ताक्षेम कर्ताशान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता शुभदो वरदो भव ॥ बलिदानेनानेन क्षेत्रपः प्रीयताम् ॥ इदं बलिं अनवेक्ष्यमाणेनदुर्ब्राह्मणेन नीत्वा चतुष्पथे निक्षिपेत् स यजमानोऽपि तस्य पृष्ठतोद्वारपर्यन्तं गत्वाजलं क्षिपेत् ॥ इति क्षेत्रपाल बलिदान विधिः ॥ हस्तौपादौ प्रक्षाल्याचम्य आसन उपविशेत् ॥ बलिदानानन्तरंगणेशादिदेवतानामुत्तरपूजनंकुर्यात् ॥

———

अथ सर्वतोभद्रमण्डल विधिः ॥

हेमाद्रौ स्कान्दे ॥

प्रागुदीच्यागता रेखाः कुर्यादेकोन ( १६ ) विंशतिम् ॥ खंडेन्दुखिपदः कोणे शृङ्खलापञ्चभिः पदैः ॥ एकादशपदावल्ली भद्रं तु नवभिः पदैः ॥ चतुर्विंशत्पदा वापी विंशत्यापरिधिः पदैः ॥ २ ॥ मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलंस्मृतम् ॥ श्वेतेन्दुः शृङ्खलाः कृष्णा वल्लीर्नीलेन पूरयेत् ॥ ३ ॥ भद्रं रक्तं सितावापी परिधिः पीतवर्णकः ॥ वाह्यानन्तरदलश्चैव कर्णिकापीतवर्णका ॥ ४ ॥ परिध्यावेष्टितं पद्मं बाह्ये सत्वं रजस्तमः ॥ तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरेश्वरान् ॥ ५ ॥ इति सर्वतोभद्र पीठम् ॥ शिवव्रतं बिना सर्व व्रतोद्यापनेषु सर्वतो भद्र मण्डलंकारयेत् ॥ तत्रकारिका ॥ बाहुमात्रांयदा वेदीं कुर्याच्छुद्धमृदाबुधः ॥ तद्वेयां सर्वतोभद्रं मण्डलं-

विलिखेत्ततः ॥ विलिखेत्सर्वतोभद्रं वेदिकायान्तुसुन्दरम् ॥ अथ मण्डल देवताः ॥ आचम्य प्राणानायम्य ॥ देशकालौस्मृत्वा ॥ ॐ अद्यदुर्गाहव-नाख्ये कर्मणि एतत्सर्वतो भद्रमण्डले वेदमन्त्रैः ब्रह्मादि षट् पञ्चाशद्देवता-वाहनं प्रतिष्ठा पूजनं च करिष्ये ॥ पुष्पाक्षतान्गृहीत्वा ॥ मध्ये ब्रह्माणमा वाहयेत् ॥ ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः ॥ सवुन्ध्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चव्विवः ॥ १ ॥ भो ब्रह्मन् इहागच्छ इहतिष्ठ ब्रह्मणे नमः ॥ ब्रह्माणं आवाहयामि स्थापयामि नमः ॥ पूजां गृहाणमम संमुखोभव ॥ एवं सर्वत्र ॥१॥ उत्तरेसोमावाहनम् ॥ ॐ आप्यायस्वसमेतुते विश्वतः सोम वृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ सोमाय नमः ॥ २ ॥ ईशान्यामीशानम् ॥ ॐ अभित्वा देव सवितरीशानं वर्या-णाम् ॥ सदावन्भागमीमहे ॥ ईशानाय० ॥ ३ ॥ पूर्वे इन्द्रम् ॥ ॐ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ॥ अस्माकमस्तु केवलः ॥ इन्द्राय० ॥४॥ आग्नेयामग्निम् ॥ ॐ अग्निन्दूतं वृणीमहेहोतारं विश्ववेदसम् ॥ अस्य-यज्ञस्य सुक्रतुम् ॥ ५ ॥ दक्षिणेयमम् ॥ ॐ यमाय सोमं सुनुतयमाय जुहुता हविः ॥ यमं ह यज्ञोगच्छत्यग्नि दूतोऽअरंकृतः ॥ ६ ॥ नैर्ऋत्या-न्नैर्ऋतिम् ॥ ॐ मोषुणः परापरानिर्ऋतिदुर्हणावधीत् ॥ पदीष्टतृष्ण-यासह ॥ ७ ॥ पश्चिमे वरुणम् ॥ ॐ तत्वायामिब्रह्मणा वन्दमानस्तदा-शास्ते यजमानोहविर्भिः ॥ अहेडमानो वरुणेहबोध्युरुशर्ठ० समानऽआयुः प्रमोखीः ॥८॥ वायव्यां वायुम् ॥ ॐ वायोशतं हरीणांयुवस्वपोष्याणाम् ॥ उतवाते सहस्रिणोरथ आयातुवाजसा ॥ ९ ॥ ईशान पूर्वयोर्मध्ये ब्रह्मा-णम् ॥ ॐ अस्मेरुद्रामेहनापर्वता सोवृत्रहत्येभरहूतौ सजोषाः ॥ यः शर्ठ० सते।तुवते धायि पज्रऽइन्द्रज्येष्ठाऽअस्मां २ अवन्तु देवाः ॥ १० ॥ वायु सोमयोर्मध्ये अष्टवसून् ॥ ॐ जाया अत्र वसवोरन्त देवाऽएवंतरिक्षे मर्ज यन्तशुभ्राः ॥ अर्वाक्पथऽउरुजायः ॥ कृणुध्वं श्रोतादूतस्य कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥ ११ ॥ सोमेशानयोर्मध्ये एकादशरुद्रान् ॥ ॐ आरुद्रासऽइन्द्रवन्तः सजोषसोहिरण्यरथाः सुविताय गन्तन ॥ इयं वो



ऽअस्मत्प्रति हर्यते मतिस्तृष्णजनेदिवऽउत्साऽउदन्यवे ॥ १२ ॥ ईशानेन्द्र-गोर्मध्येद्वादशादित्यान् ॥ ॐ त्यांनुक्षत्रियां अवऽआदित्यान्या चिषामहे ॥ सुमृडीकाऽ अभिष्टये ॥ १३ ॥ इन्द्राग्न्योर्मध्ये अश्विनौ ॥ ॐ अश्विना-वर्तिरस्मदागोमद्दस्रा हिरण्यवत् ॥ अर्वाग्रथं समनसानियच्छतम् ॥ १४ ॥ अग्नियमयोर्मध्येविश्वेदेवान् ॥ ॐ ओ मा सश्चर्षणीधृतो विश्वेदेवास-ऽआगत ॥ दाश्वां सोदाश्वाशुषः सुतम् ॥१५॥ तत्रैव पितॄन् ॥ ॐ आ-यन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः॥ अस्मिन्यज्ञेस्वधयाम-दन्तोधिब्रुवन्तु तेवन्त्वस्मान् ॥ १६ ॥ यमनिर्ऋत्योर्मध्ये सप्तयक्षान् ॥ ॐ अभित्यं देवं सवितारमोण्योः कवि क्रतुमर्चासि सत्य सवंरत्न धामभिप्रियं मतिं कविम् ॥ ऊर्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणि रमिमी त सुक्रतुः कृपास्वः ॥१७॥ निर्ऋति वरुणयोर्मध्ये सर्पान् ॥ ॐ आयङ्गौः पृश्निरक्रमी दसदन्मातरं पुरः पितरं च प्रयन्त्स्वः ॥१८॥ वरुणवाय्वोर्मध्ये गन्धर्वाप्सरसो ॥ अप्सरसां गन्धर्वाणां मृगाणां चरणेचरन् ॥ केशी-केतस्यविद्वान्सखा स्वादुर्मदिन्तमः ॥ १९ ॥ ब्रह्मसोमयोर्मध्ये स्कन्दम् ॥ ॐ यदक्रन्दः प्रथमंजायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्य पक्षा-हरिणस्यवाहूऽउपस्तुत्यंमहिजातन्तेऽअर्वन् ॥२०॥ तत्रैवनन्दीश्वरम् ॥ ऋष-भंमासमानानां सपत्नानां विषासहिम् ॥ हंतारंशत्रूणां कृधिविराजं गोपतिं-गवाम् ॥२१॥ तत्रैवशूलम् ॥ ॐ कद्रुद्रायप्रचेतसे मीढुष्टमायतव्यसे ॥ वो चे मशंतमंहृदे ॥२२॥ तत्रैव महाकालं ॥ ॐ कुमारं माता युवतिः समुब्धं ग्रहाविभर्तिनददातिपित्रे ॥ अनीकमस्यनमिवज्जनासःपुरः पश्यन्तिनिहित-मरतौ ॥ २३ ॥ ब्रह्मेशानयोर्मध्ये दक्षम् ॥ ॐ अदितिर्ह्यजनिष्ट दक्षया-दुहिता तव ॥ तां देवाऽअन्वजायन्त भद्राऽअमृतबंधवः ॥ २४ ॥ ब्रह्मेन्द्र-योर्मध्ये दुर्गां ॥ ॐ तामग्नि वर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु-जुष्टाम् ॥ दुर्गां देवीं शरणमहं प्रपद्येसुतरसितरसेनमः ॥ २५ ॥ ब्रह्मेन्द्र-योर्मध्ये विष्णुम् ॥ ॐ इदं विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्य पांसुरे स्वाहा ॥ २६ ॥ ब्रह्माग्न्योर्मध्ये स्वधाम् ॥ ॐ उदीरतामवरसऽ-

उत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुंयऽईयुरवृकाऽऋतज्ञास्ते नोवन्तुपितरोहवेषु ॥ २७ ॥ ब्रह्मयमयोर्मध्ये मृत्युरोगौ ॥ ॐ परंमृत्योऽ अनुपरेहिपन्थांयस्ते सऽइतरोदेवयानात् ॥ चक्षुष्म ते शृण्वते ते ब्रवीमि मानः प्रजांरीरिषमोत वीरान् ॥ २८ ॥ ब्रह्मनिर्ऋत्योर्मध्ये गणपतिम् । गणानान्त्वा गणपतिं कविं कवीनामुपमश्रवस्तमम् ॥ ज्येष्ठ राजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ २९ ॥ ब्रह्मवरुणयो र्मध्ये अपः ॥ ॐ शन्नो देवी रभिष्टयऽआपोभवन्तु पीतये ॥ शंयो रभिस्र वन्तुनः ॥ ३० ॥ ब्रह्मवाय्वोर्मध्येमरुद्गणान् ॥ ॐ मरुतोयस्यहिक्षये पाथा-दिवोविमहसः ॥ ससु गोपातमोजनः ॥ ३१ ॥ ब्रह्मणः पाद मूले पृथ्वी ॥ ॐ स्योना पृथिविनोभवानृक्षरानिवेशनि ॥ यच्छानः शर्म सप्रथाः ॥३२॥ तत्रैव गङ्गादि सरितः ॥ ॐ इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं स चताप रुष्णया ॥ असि कन्यामरुद्वृधे वितस्तयार्जी की ये शुणुह्या सुषो-मया ॥३३॥ तत्रैवसप्तसागरान् ॥ ॐ धाम्नोधाम्नोराजन्नितोवरुणनोमुञ्च ॥ यदापोऽअघ्न्याऽइतिवरुणेति शपामहे ततोवरुणनोमुञ्च ॥ मयिवायोमोषधी र्हिꣳ सीरतोविश्वव्यचाभूस्त्वेतो वरुणनोमुञ्च ॥३४॥ तदुपरिनाममन्त्रेण पूजयेत् ॥ ॐ भैरवेनमः ॥३५॥ ततो मण्डलाद्बहिः दिग्पाल हेतयः ॥ उत्तरे गदाम् ॥३६॥ ईशान्यांत्रिशूलं ॥३७॥ पूर्वेवज्रम् ॥३८॥ अग्नौशक्तिम् ॥३९॥ दक्षिणेदण्डम् ॥४०॥ निर्ऋत्यां खड्गम् ॥४१॥ पश्चिमे पाशम् ॥४२॥ वा यव्यामंकुशम् ॥४३॥ तद्बाह्ये ॥ उत्तरेगौतमम् ॥४४॥ ईशान्याम्भरद्वाजम् । ॥४५॥ पूर्वे विश्वामित्रम् ॥४६॥ आग्नेयां कश्यपम् ॥४७॥ दक्षिणे यमदग्निम् ॥४८॥ नैर्ऋत्यां वसिष्ठम् ॥४९॥ पश्चिमे अत्रिम् ॥५०॥ वायव्यामरुन्धतीम् ॥५१॥ तद्बाह्ये पूर्वादिक्रमेण ॥ ऐन्द्रीं ॥५२॥ कौमारीं ॥५३॥ ब्राह्मीं ॥५४॥ वाराहीं ॥५५॥ चामुण्डाम् ॥५६॥ वैष्णवीं ॥५७॥ माहेश्वरीम् ॥५८॥ वैनाय-कीम् ॥५९॥ इत्यष्टौ शक्तयः ॥ चतुष्कोणेषु चतुष्कलशेषु यजुरादि चतुर्वेदेभ्यो नमः नाममंत्रेण पूजयेत् ॥ इति सर्वतो भद्र मण्डलस्थ देवान् पूजयित्वा-तदुपरि कलशं प्रतिष्ठाप्य कलश प्रतिष्ठा २६ और प्राणप्रतिष्ठा १५ पृष्ठ में देखिये ॥ ततः प्रधान देवतायाः प्राणप्रतिष्ठा दीनकृत्वा पूजयेत् ॥

अथ पंचभूः संस्कार पूर्वकमग्नि स्थापनम् ॥

अथाचार्योस्थण्डिले कुण्डे वा पञ्चभूसंस्कारान्कृत्वा लौकिकाग्निं स्थापयेत् ॥ अथ पञ्चभूसंस्काराः ॥ तत्र कुशैर्हस्त परिमितां चतुरस्रां भूमिं परिसमुह्य ( ३ बार ) तान्कुशानैशान्यां निक्षिप्य ॥ गोमयोदकेनोपलिप्य ( ३ बार ) स्रुवमूलेनप्रादेशमात्रमुत्तरोत्तर क्रमेण प्रागग्रंत्रिरुल्लिख्य ॥ उल्लेखन क्रमेणानामिकां गुष्ठाभ्यां मृदमुद्धृत्य (३ बार) वारिणा तं देशमभ्युक्ष्य (३ बार) कांस्यपात्रस्थं लौकिकाग्निमग्नि कोणादानीय प्रत्यङ्मुखमुप समाधाय ॥ क्रव्यादांशंत्यजेदनेनमंत्रेण ॥ ॐ क्रव्यादमग्निंप्रहिणोमि दूरं यमराज्यं गच्छतुरिप्रवाहः ॥ इहै वा यमितरो जातवेदा देवेभ्यो हव्यं वहन्तु प्रजानन् ॥ अथावाहनम् ॥ ॐ अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे ॥ देवांऽआसादयादिह ॥ अग्न्यानीत पात्रे साक्षतोदकं निषिञ्चेत् ॥ संमुखी करणम् ॥ ॐ चत्वारि शृङ्गात्रयोऽअस्य पादाद्वेशीर्षे सप्त हस्ता सो अस्य ॥ त्रिधाबद्धो वृषभो रोरवीति महोदेवोमर्त्याँऽआविवेश ॥ अग्ने वैश्वानर शांडिल्य गोत्र शांडिल्यासित देवलेति त्रिप्रवरान्वित भूमिमातः वरुणपितः मेषध्वज प्राङ्मुखमम संमुखोभव ॥ वरदनामाग्नि प्रतिष्ठाप्य ॥ वरदनामाग्नये नमः॥ इति नाम मंत्रेण वायव्य कोणेस्थंडिलाद्बहिरग्नि पूजनं विधाय ॥ अथ ध्यानम् ॥ॐ(१)रुद्रतेज समुद्भूतं द्विमूर्द्धानं द्विनासिकम् ॥ षण्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् ॥ याम्यभागे चतुर्हस्तं सव्य भागे त्रिहस्तकम् ॥ स्रुवं स्रुचिं च शक्तिश्च अक्षमालां च दक्षिणे ॥ तोमरं व्यञ्जनं चैवघृतपात्रं तु वामके ॥ बिभ्रंतं सप्तभिर्हस्तैर्द्विमुखंसप्तजिह्वकम् ॥ दक्षिणे च चतुर्जिह्वं त्रिजिह्वं चोत्तरेमुखे॥ द्वात्रिंशत्कोटिमूर्त्याख्यं द्विपंचाशत्कलायुतं ॥ स्वाहास्वधा वषट् कारैरंकितं मेषवाहनम् ॥ रक्तमाल्याम्बररक्त रक्तपद्मासने स्थितं ॥ रुद्रं त्वां शुभना-

१ लक्ष्मीं ऋतु मतींतत्र प्रभोर्नारायणस्य च ॥
ग्राम्य धर्मेण संजातमग्नि तत्र विचिन्तयेत् ॥

माहंवन्हि मावाहयाम्यहम् ॥ त्वंमुखे सर्वदेवानां सप्तार्चिरमित द्युते ॥ आगच्छभगवन्नग्ने यज्ञेऽस्मिन्सन्निधिं कुरु ॥ ॐ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ हिरण्यवर्ण मनलं समृद्धं विश्वतोमुखम् ॥

अथ कुशण्डिका विधिः ॥

तत्रादौ कुण्ड ( स्थंडिल ) पश्चिमे यजमान उपविश्य ॥ देशकालौ संकीर्त्य-अमुक गोत्रोमुक शर्म्माहं दुर्गाहवन कर्मणि इदं हविर्द्रव्यं गणेश पञ्चोंकार द्वादशविनायक षोडशमातृका वास्तु पुरुष सपैतृक विश्वेदेवा ६४ योगिनि सप्तवसोद्धारा सूर्यादिग्रहा ईश्वराद्यधिदेवताग्न्यादि प्रत्यधि देवता पञ्चलोक पाल १० दिग्पाल ब्रह्मादि सर्वतोभद्र मण्डलस्थ पञ्चाशद्देवताभ्यो नमम ॥ ततआचार्योग्नेर्दक्षिणतः परिस्तरण भूमित्यक्त्वा ब्रह्मणे आसनं दत्वा तदुपरि प्रागग्रानुदगग्रान्कुशानास्तीर्य ब्रह्माणमग्नि प्रदक्षिण क्रमेणानीय अस्मिन्दुर्गाहवनकर्मणि त्वं मे ब्रह्माभव ॥ इत्यभिधाय ॥ वरण कर्मणा पूर्व संपादितं ब्राह्मणं तदभावे ५० पञ्चाशत्कुशनिर्मितं ( ब्रह्माणं ) कल्पितासने उपवेशयेत् .पूजयेच्च ॥ ततः प्रणीतापात्रं पुरतः कृत्वा जलेनापूर्य कुशात्रयेणाच्छाद्य ब्रह्मणोमुखमवलोक्य ॥ अग्नेरुत्तरतः कुशोपरिनिदध्यात् ॥

ततः परिस्तरणम् ॥

बर्हिषश्चतुर्थ (१६) भागमादाय चतुर्भिर्दर्भैः पूर्वाग्रैराग्नेया दीशानान्तम्॥४॥प्रागग्रैर्ब्रह्मणोग्निपर्यन्तम्॥४॥ प्रागग्रैर्नैऋर्त्याद्वायव्यान्तम्॥४॥ प्रागग्रैरग्नितः प्रणीतापर्यन्तम् ॥४॥ परिस्तरणं कृत्वा ॥ ततः अग्नेरुत्तरतः पश्चिमदिशि पवित्र छेदनार्थं कुशात्रयम् ॥ पवित्र करणार्थं पवित्रे साग्रम

---

दशाङ्ग धूपस्तु हेमाद्रौ व्रतखण्डे ॥

षड् भाग कुष्ठं द्विगुणो गुडश्च लाक्षात्रयं पञ्च नखस्य भागाः ।
हरीतकी सर्ज रसः समांशं भागैकमेकं त्रिलवं शिलाजम् ॥
घनस्य चत्वारि पुरस्यचैको धूपोदशाङ्गः कथितो मुनीन्द्रैः ॥

अनन्तर्गर्भेद्विकुशंपत्रे ॥ प्रोक्षणी पात्रम् ॥ आज्यस्थाली ॥ चरुस्थाली ॥ संमार्जन कुशाः पञ्च ॥ उपयमन कुशाः सप्त ॥ समिधस्तिस्रः पालाश्यः प्रादेशमात्राः ॥ स्रुवः खादिरो हस्तमात्रः ॥ आज्यं गव्यम् ॥ शोधितास्तन्दुलाः ॥ पूर्णपात्रम् ॥ दक्षिणा वरोवा ॥ पवित्र छेदन कुशानां पूर्व पूर्व दिशिक्रमेणासादनीयम् ॥ ततः पवित्रछेदनैः पवित्र करणम् । द्वयोः पवित्रयोरुपरि पवित्र त्रयंनिधाय ॥ अग्रतः प्रादेशमात्रं विहाय त्रिभिः कुशैर्द्वैकुशतरुणे प्रच्छिद्य ॥ द्वयोर्मूलं त्रीणिचोत्तरतःक्षिपेत् ॥ ततः सपवित्र हस्तेन प्रणीतोदकं त्रिःप्रोक्षणीपात्रेनिक्षिप्य ॥ अनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् ॥ प्रोक्षणी पात्रस्य सव्यहस्ते करणम् ॥ अनामिकांगुष्ठाभ्यां पवित्रेगृहीत्वा त्रिरुदिङ्गनम् ॥ ततः प्रणीतोदकेन प्रोक्षणी प्रोक्षणम् ॥ प्रोक्षणी जलेन आज्यस्थाल्यादीनि पूर्णपात्र पर्यन्तानि क्रमेणैकैकशःप्रोक्ष्य ॥ असञ्चरे प्रणीताग्न्योरन्तरालेप्रोक्षणीपात्रंनिधाय ॥ आसादितमाज्यं पश्चादग्नेर्निहितायामाज्यस्थाल्यां प्रक्षिप्य ॥ चरुस्थाल्यां प्रणीतोदकमासिच्य ॥ आसादितांस्तंडुलान्प्रक्षिप्य ॥ तत्राज्यं ब्रह्माधिश्रयति ॥ तदुत्तरतः स्वयं चरुमेवयुग पदग्नावारोप्य ईषच्छृते चरौ ज्वलदुल्मुकंप्रदक्षिणं आज्यचर्वोःसमन्ताद् भ्रामयेत् ॥ दक्षिणपाणिना स्रुवमादाय॥ अधोमुखमग्नौतापयित्वा सव्यपाणौ कृत्वा ॥

## कुशंडिका

दक्षिणेनसंमार्जनाग्रैर्मूलतोग्रपर्यन्तं मूलैरग्रमारभ्य अधस्तान्मूल पर्यन्तं स्रुवसंमृज्यप्रणीतोदकेनाभिषिञ्च्य ॥ पुनः प्रतप्य दक्षिणतोनिदध्यात् ॥ ततः आज्यमुत्थाप्य ॥ चरोः पूर्वेणनीत्वाग्नेरुत्तरतः स्थापयित्वा ॥ चरुमुत्थाप्य ॥ आज्यस्य पश्चिमतो नीत्वाज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय ॥ चरुं चानीय ॥ आज्यस्योत्तरतो निदध्यात् ॥ तत पूर्ववत्पवित्राभ्यामाज्यमुत्पूय ॥ अवलोक्य ॥ तस्मादप द्रव्यनिरसनं पुनः प्रोक्षिण्युत्पवनं ॥ ततः उपयमन—कुशानादाय ॥ उत्तिष्ठन् प्रजापतिम्मनसाध्यात्वा ॥ तूष्णीमग्नौघृताक्ताः समिधस्तिस्रः

प्रक्षिपेत् ॥ ततउपविश्य ॥ प्रोक्षिण्युदकेन सपवित्रेणाग्निमीशानादिउद-क्पर्यन्तं परिषिच्य ॥ दक्षिणजान्वाच्य ॥ ब्रह्मणान्वारब्धः ॥ यजमाने नान्वारब्धश्च समिद्धतमेग्नौ स्रुवेणाज्याहुतीर्जुहुयात् ॥ तत्राघारावाज्य-भागौ च हुत्वा अनन्तरंस्रुवावस्थितहुतशेषंघृतस्यप्रोक्षणी पात्रेप्रक्षेपः ॥

## अथ होमः ॥

अग्नेरुत्तरभागे । ॐ ( नमः ) प्रजापतये स्वाहा, प्रजापतये इदं-नमम ॥ अग्नेर्दक्षिणभागे ॥ ॐ इन्द्राय स्वाहा, इन्द्रायेदन्नमम ॥ इत्या-घारौ ॥ मध्येसमिद्धतमे ॥ ॐ अग्नये स्वाहा, अग्नयेदन्नमम ॥ ॐसोमाय स्वाहा, सोमायेदन्नमम ॥ इत्याज्यभागौ ॥ अथाचार्योऽग्निं सम्पूज्य ॥ ततः गणेशादिमण्डल स्थापितदेवानां हवनं कुर्यात्तथैव सर्वतो भद्रमण्ड-लस्थ देवानामपि कुर्यात् ॥ पुनः कवचार्गला कीलकं पठित्वा नवार्ण-न्यासान्विधाय नवार्णेनापि १०८ हुत्वा ततः सप्तशती न्यासान्कृत्वा च मार्कण्डेय उवाच इत्यारभ्य ॐ सावर्णिर्भविता मनुरित्यन्तं हुत्वा पुनरुत्तरन्यासान्विधाय १०८ नवार्णं च जुहुयात् ॥ ततो हुतशेषं हविर्द्र-व्यं गृहीत्वा ब्रह्मणान्वारब्धः स्विष्टकृद्धोमंकुर्यात ॥ ॐ अग्नये स्विष्टकृते स्वाहा. इदमग्नये० ॥ ततोभूराद्यानवाहुतयः ॐ भूः स्वाहा, इदमग्नये ॥ ॐभुवः स्वाहा, इदंवायवे॥ॐस्वः स्वाहा, इदमग्निवायुसूर्येभ्यः॥ॐत्वन्नो अग्ने वरुणस्य विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥ यजिष्ठोवन्हितमः शोशुचानो विश्वाद्वेषा ४ सिप्रमुमुग्ध्यस्मत्स्वाहा, इदमग्नी वरुणाभ्याम् ॐ सत्वन्नोऽअग्नेवमो भवोतीनेदिष्ठो अस्याऽउषसोव्युष्टौ अवयक्ष्वनो वरुणꣳ रराणो वीहिसुमृडीकꣳ सुहवोनऽएधि स्वाहा, इदमग्नीवरुणा-भ्याम् ॥ॐअयाश्चाग्नेस्य नभिशस्तिपाश्चसत्वमित्व मयाऽअसि॥अयानो यज्ञं वहास्ययानोधेहि भेषजꣳ स्वाहा, इदंअयसेऽअग्नये ॥ ॐ येते शतं वरुण ये सहस्रं यज्ञिया पाशा वितता महान्तः ॥ ते भिर्नोऽअद्य सवितो तविष्णुर्मुंचन्तु मरुतःस्वर्काः स्वाहा, इदं वरुणाय सवित्रे विष्णवे विश्वे-भ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च ॥ ॐ उदुत्तमं वरुण पाशमस्म दवा-

धर्मं त्रिमध्यमर्ठ० श्रथाय ॥ अथावयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा ॥ इदंवरुणाय ॥ ॐ प्रजापतये स्वाहा, इदं प्रजापतये ॥ ॐ अग्नयेस्विष्ट कृते स्वाहा, इदमग्नये स्विष्टकृते ॥

## अथ बलिदानम् ॥

अद्य कृतस्य कर्मणः सांगता सिद्धयर्थं दिग्पाल पूर्वकं आदित्यादि ग्रह मण्डल स्थापित देवताभ्यो बलिदानंच करिष्ये ॥पूर्वे॥ ॐ त्रातारमिन्द्र मविता रमिन्द्र ठं० हवे हवे सुहव ठं० शूरमिन्द्रम् ॥ ह्वयामिशक्रं पुरुहूतमिन्द्रर्ठ० स्वस्तिनोमघवाधात्विन्द्रः ॥ इन्द्रायनमः सर्वोपचारार्थे गन्धाक्षतपुष्पादिना संपूज्य एवं सर्वत्र ॥ ॐइन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीप दधिमाषभक्त बलिं समर्पयामि ॥ भो इन्द्र दिशं रक्ष बलिं भुङ्क्ष्व मम सकुटुम्बस्य अभ्युदयं कुरु आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदोभव ॥ अनेन बलिदानेन इन्द्रः प्रीयताम् ॥ अग्निकोणे ॥ ॐ त्वन्नोऽअग्नेतवदेव पायुभिर्मघोनो रक्षतन्वश्चवन्द्य ॥ त्राता तो कस्यतनयेगवा मस्य निमेषर्ठ० रक्षमाणस्तवव्रते ॥ अग्नयेनमः ॥ अग्नये सा० ॥ भो अग्नेदिशं० ॥ दक्षिणेयमम् ॥ ॐ यमाय त्वांगिरस्वतेपितृमते स्वाहा ॥ स्वाहाघर्माय स्वाहा घर्मः पित्रे ॥ यमाय नमः ॥ भोयम० ॥ नैर्ऋत्यां ॥ ॐ असुन्वन्तम यजमानमिच्छस्तेन स्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छ सातऽइत्यानमोदेविनिर्ऋते तुभ्यमस्तु ॥ निर्ऋतयेनमः ॥पश्चिमे॥ ॐ तत्वायामि ब्रह्मणा वन्दमानस्त दाशास्तेयजमानो हविर्भिः ॥ अहेडमानो वरुणेहबोध्युरुशर्ठ० समानऽआयुः प्रमोषीः ॥ वरुणायनमः॥वायव्यां॥ ॐ आनोनियुद्भिःशतिनीभिरध्वरर्ठ० सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वं यूयंपातस्वस्तिभिः सदानः ॥ वायवे० ॥ उत्तरे ॥ ॐ वयर्ठ० सोमव्रते तव मनस्त नूषुबिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ सोमाय० ॥ ईशान्यां ॥ ॐ तमीशानं जगतस्तस्थुषस्पतिन्धियं जिन्वमवसेहूमहेवयम् ।पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः ॥ स्वस्तये ॥ ईश्वराय० ॥ पूर्वेशानयोर्मध्ये ॥ ऊर्ध्वे ॥



ओं अस्मेरुद्रामेहनापर्वतासोवृत्रहत्ये भरहूतौसजोषाः ॥ यः शर्ठ० सते स्तुवतेधायिपज्र इन्द्रोज्येष्ठाऽअस्मांऽअवन्तुदेवाः ॥ ब्रह्मणे० ॥ निर्ऋतिपश्चिमयोर्मध्येऽधोभागे ॥ ओं स्योनापृथि विनोभवान्नृक्षरानिवशनी ॥ यच्छानः शर्म स प्रथाः ॥ अनन्ताय० ॥ ततो ग्रहवेदिसमीपे सूर्यादिग्रहाणां बलिः ॥ ओं आकृष्णेन रजसा० ॥ सूर्यादिग्रहेभ्यः अधिदेवता प्रत्यधिदेवता सहितेभ्यः सांगेभ्यः सप० सवा० इमं सदीपदधिमाषभक्तबलिं समर्पयामि ॥ भो भो सूर्यादि देवताः दिशः रक्षत बलिंभक्षत दीपं पश्यत ॥ मम ( यजमानस्य ) सकुटुम्बस्याभ्युदयं कुरुत ॥ आयुः कर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्न कर्तारः वरदाभवत ॥ अनेनबलिदानेन सूर्यादि ग्रहाः प्रीयन्ताम् ॥ ततो १६ मातृणामेकबलिं दद्यात् ॥ ओं ससख्येदे व्याधियासं दक्षिणयोरुचक्षसा ॥ मामऽआयुः प्रमोषीर्मोऽअहन्तववीरम्वि देयतवदेविसंदृशि ॥ गौर्यादि मातृभ्य इमं सदीपमाष भक्त बलिं समर्पयामि, भो भोगौर्यादि मातर इमं बलिं गृह्णीत मम ( यजमानस्य ) सकुटुम्बस्याभ्युदयं कुरुत आयुः कर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्न कर्त्र्यः वरदाभवन्तु ॥ बलिदानेनानेन गौर्यादिषोडशमातरः प्रीयन्ताम् ॥ ततः प्रधान बलिः ५६ पृष्ठ में देखिये ॥ क्षेत्रपाल बलिदान ४१४ पृष्ठ में है ॥

अद्येत्यादि वासन्तिक ( शारदीय ) नवरात्रौ हवनकर्मणि सांगतासिद्ध्यर्थं गणपत्यादि मण्डल स्थापित देवानामुत्तर पूजनं करिष्ये॥ ओं गणानान्त्वा० ॥ ओं ग्रहाऽऊर्जाहुतयोव्यन्त विप्रायमतिम् ॥ तेषां विशिप्रियाणां वोहऽइषमूर्जर्ठ० समग्रभम् ॥ ओं अम्बेऽअम्बिकेम्बालिके० ॥ गणेशादि मण्डल स्थापितसर्वेभ्योदेवताभ्योनमः ॥ गन्धादिभिः संपूज्य ॥ वेदपाठः ॥ ओं इषेत्वोर्जेत्वावायवस्थ देवोवः सवितापार्पयतुश्रेष्ठतमायकर्मणऽआप्यायध्वमघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मामा वस्तेनऽईशतमाघशर्ठ० सो ध्रुवाऽअस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ ओं अग्निमीलेपुरोहितं यज्ञस्यदेव-

मृत्विजम्। होतारं रत्नधातमम् ।। उों अग्नऽआयाहि वीतये गृणानो-हव्यदातये। निहोता सत्सि बर्हिषि ।। उों शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः ।। उों ब्रह्मामुरारिस्त्रिपुरांतकारी भानुश्शशो भूमिसुतो बुधश्च। गुरुश्च शुक्रश्शनिराहुकेतवः सर्वे ग्रहाः शान्तिकरा भवन्तु ।। हवन का दशांश ।। पात्र में कच्चा दूध जल मिलाकर हाथ में कुशा लेकर इस मन्त्र से तर्पण करना चाहिए जिन महानुभावों ने हवन करा है—दुर्गां तर्पयामि नमः।। तर्पण से दशांश, दुर्गां मार्जयामि नमः ।। इससे मार्जन करना ।।

अथ पूर्णाहुतिः ।।

एवं होमं समाप्य उत्तराङ्गानि कुर्यात् ।।
पूजास्विष्टं नवाहुत्यो बलिः पूर्णाहुतिस्तथा ।।
आशीर्वादप्रदानं च अभिषेको विसर्जनम् ।।

ततो यजमानपत्नीमाहूय ग्रन्थिबन्धनं कृत्वा तद्दक्षिणे स्थित्वा गणेशादिदेवताभ्यो नमः ।। इत्येनन गंधाक्षतादिभिः संपूज्य ।। पश्चात् ॐ अग्ने नय सुपथारायेऽअस्मान्विश्वानि देवव्वयुनानि व्विद्वान् ।। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिंव्विधेम ।। मृडग्नयेनमः इति-गन्धादिभिः संपूज्य ।। ॐ अद्येत्यादि० कृतस्य दुर्गाहवनकर्मणः साङ्गतासिद्धयर्थं वसोर्द्धारासमन्वितं पूर्णाहुतिहोमं करिष्ये ।। ततः पात्रांतरे स्रुवेण चतुर्गृहीताज्यं द्वादशवारं गृहीतं वा गृहीत्वा पात्रोपरि(समिधं) धृत्वा वस्त्रफलताम्बूलगंधमाल्यादिभिरलंकृत्य गृहीत्वा पात्रं स्रुच्युपरिनिधाय धृत्वोभयपाणिभ्यां यजमानस्तिष्ठेत् ।। ॐ समुद्रादूर्मिर्मधुमा ७ उदारदुपा ७ शुनासममृतत्वमानट् ।। घृतस्य नाम गुह्यन्त्यदस्तिजिह्वा देवानाममृतस्य नाभिः ।।१।। चत्वारि शृङ्गा त्रयोऽअस्यपादा द्वेशीर्षे सप्त हस्तासोऽअस्य त्रिधाबद्धो वृषभो रोरवीति महोदेवो मर्त्यां२ आविवेश ।। २ ।। पुनस्त्वादित्या रुद्रा व्वसवः समिन्धताम्पुनर्ब्रह्माणो व्वसुनीथ यज्ञैः ।। घृतेन त्वंतन्वंव्वर्धयस्वसत्याः संतु यजमानस्यकामाः ।३। सप्ततेऽअग्ने समिधः सप्तजिह्वः सप्तऽऋषयः सप्तधाम प्रियाणि ।। सप्तहोत्राः सप्तधा त्वा यजन्ति सप्तयोनीरापृणस्वांघृतेन स्वाहा ।।४।। पूर्णादर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहाऽइषमूर्जं ०

शतक्रतो स्वाहा ॥ ५ ॥ इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च न मम ॥ वरुणकलशे त्यागः ॥ ततोवसोर्द्धारां जुहुयात् ॥ सप्ततेऽअग्ने समिधः० ॥ ततः अग्निप्रार्थना ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम् ॥ तेजआयुष्यमारोग्यं देहि मे हव्यवाहन ॥ भोभो अग्ने महाशक्ते सर्वकर्मप्रसाधन ॥ कर्मांतरे पि संप्राप्ते सान्निध्यं कुरु सर्वदा ॥

त्र्यायुषकरणम् ॥ ॐत्र्यायुषं यजमदग्नेरितिललाटे ॥ ॐ कश्यपस्य त्र्यायुषमितिग्रीवायाम् ॥ ॐ यद्देवेषुत्र्यायुषमिति दक्षिणांसे ॥ तन्नो अस्तु त्र्यायुषमिति हृदि ॥ वामस्कन्धे च ॥ ततः संस्रवप्राशनम् ॥ पवित्राभ्यां मार्जनम् ॥ अग्नौ पवित्र प्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ तद्यथा, अद्येत्यादि पठित्वा ॥ अद्य कृतैतद्दुर्गाहवनाख्य कर्मणि हवनकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं सदक्षिणम् प्रजापतिदैवतममुकगोत्राय—अमुकशर्म्मणे ब्राह्मणाय ब्रह्मणे तुभ्यमहं संप्रददे ॥ ॐ स्वस्तीति प्रतिवचनम् ॥ ततो ब्रह्मग्रन्थिविमोकः ॥ ततः प्रणीतोदकेन ॥ ॐ सुमित्रियानऽआपऽ ओषधयः सन्त्विति ॥ ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमाः तास्ते कृण्वन्तु भेषजमिति ॥ यजमान मूर्द्धानमभिषिञ्चति ॥ ततः दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यं च वयं द्विष्मः । इति ईशान्यां प्रणीतां न्युब्जी कुर्यात् ॥ ततः परिस्तरण क्रमेणबर्हिरुत्थाप्याज्येनाभिघार्य ॥ ॐ देव गातुविदोगातुं वित्वागातुमित ॥ मनसस्पतऽइमं देवयज्ञꣳ० स्वाहा वातेधाः स्वाहा ॥ इतिमन्त्रेण हस्तेनैव जुहुयात् ॥ ततः कलशजलं एकस्मिन्पात्रे निधाय दूर्वया यजमान मूर्द्धनि सिंचेत् ॥ आपोहिष्ठेत्यादि ३ मन्त्रैः ॥ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेननोघृतप्वः पुनन्तु ॥ विश्वꣳ० हिरिप्रम्प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतऽएमि ॥ ४ ॥ इदमापः प्रवहतावद्यञ्चमलञ्च यत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसः पवमानश्च मुञ्चतु ॥५॥ यतोयतः समीहसे ततो नोऽअभयङ्कुरु ॥ शन्नः कुरु प्रजाभ्यो भयन्नः पशुभ्यः ॥ ११ ॥ अथपुराणोक्तमन्त्राः ॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो

---

* अभिषेक में पत्नी को वाम भाग में बिठाना चाहिए ॥

जगन्नाथस्तथासंकर्षणो विभुः ॥१॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ आखण्डलोग्निर्भगवान्यमो वै निर्ऋतिस्तथा । २ । वरुणः पवनश्चैव धनाध्यक्षस्तथाशिवः ॥ ब्रह्मणा सहिताः सर्वे दिग्पालाः पांतु ते सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीधृ तिर्मेधापुष्टिः श्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ॥ ४ ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ आदित्यश्चंद्रमाभौमबुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुकेतुश्च तर्पिताः ॥ देवदानव गन्धर्वाः यक्षराक्षसपन्नगाः ॥६॥ ऋषयो मनवो गावोदेवमातर एवच ॥ देवपत्न्यो द्रुमानागा दैत्याश्चाप्सरसांगणाः ॥७॥ अस्त्राणि सर्व शस्त्राणिराजानो वाहनानि च । औषधानिच रत्नानिकालस्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ एतेत्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ द्यौः शान्तिरन्तरिक्षꣳ० शान्तिः० ॥

आरती पृष्ठे लिखितः ॥

मन्त्रपुष्पाञ्जलिः पृष्ठे ॥ ये तीर्थानिप्रचरन्तिसृकाहस्ता निषङ्गिणः ॥ तेषाꣳसहस्रयोजनेऽवधन्वानितन्मसि ॥ यानिकानि च पापानि जन्मान्तरकृतानि च ॥ तानि तानि प्रणश्यन्ति प्रदक्षिण पदेपदे ॥ पापोहं पापकर्माहं पापात्मा पापसंभवः ॥ त्राहि मां चण्डिके देवि सर्वपापहराभव ॥ प्रणाम करना ॥ गोचारिणीदक्षिणा ॥ अद्येत्यादिकृतस्य दुर्गाहवनाख्यकर्मणि अपूर्णपूर्णार्थं न्यूनातिरिक्तदोषपरिहारार्थं गोरभावे गोचारिणीं (गोदुग्धपानार्थंवा) दक्षिणां अमुक गोत्राय अमुकशर्म्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे ॥ कृतस्य दुर्गाहवनकर्मणि सांगतासिद्ध्यर्थं नाना गोत्रेभ्यः आचार्यादिऋत्विग्भ्यो दक्षिणां यथायथं विभज्य युष्मभ्यमहमुत्सृजे ॥ भूयसीदानम् ॥ कृतस्य दुर्गाहवनकर्मणः सांगतासिद्धयर्थं अपूर्णपूर्णार्थं भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यो अन्धपंगुभ्यश्च यथायथं विभजयदातुमहमुत्सृजे ॥

आशीर्वादः ॥

ॐस्वस्तिनऽइन्द्रो० ॥ श्रोर्वर्चस्वमा० ॥ पुनस्त्वारुद्रादित्या० ॥ मन्त्रार्था सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोस्तुमित्राणामुदयस्तथा ॥ आयुष्कामो यशस्कामो पुत्रपौत्रस्तथैव च ॥ आरो-

ग्यं धनकामश्चस र्वेकामाभवन्तुते । आशिषोगृह्णीयात् । ततो देवताग्नि-विसर्जनम् ॥ यान्तु देवगणाः सर्वे स्वशक्त्यापूजिता मया । इष्टकामप्र-सिद्धचर्थं पुनरागमनाय च ॥ ॐ उत्तिष्ठब्रह्मणस्पते देवयन्तस्त्वेमहे ॥ उपप्रयन्तु मरुत सुदानवऽ इन्द्रप्राशूर्भवासचा ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ पुष्पा-क्षत छोड़े ॥ मासोत्तमे अमुकमासे अमुक पक्षेऽमुकतिथौ मया यत्कृतं दुर्गाहवनशांत्याख्यं कर्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं ब्राह्म-णानां वचनात् श्रीसूर्याद्यावाहितदेवताप्रसादात्सर्वं परिपूर्णमस्त्विति भवन्तो ब्रुवन्तु ॥ अस्तु परिपूर्णं इति ब्राह्मणाः अपि ब्रूयुः । प्रमादा-त्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव दुर्गायाः सम्पूर्णं स्यादिति श्रुतिः ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तु चण्डिकाम् ॥ एवं य कुरुते शांतिं वेदशास्त्र प्रमाणतः ॥ तदनिष्टं तु सकलं सद्य एव विनश्यति ॥ दुर्गार्चनसृतिः समाप्ता ॥

## हवन क्रम सूत्र ॥

आदौ गणेश्वरः पूज्यः ओंकारं पंचधा ततः ॥ गणयागो गणेशस्य वास्तु योगिनिपूजनम् ॥ मातरो मातृपूजा च वृद्धिः श्राद्धमतः परम् ॥ ऋत्विजां वरणं रक्षाविधिवच्च कुशंडिका ॥ उत्पत्तिस्थापनं प्रोक्तं कलशं तदनन्तरम् ॥ प्रधानावाहनं पूजाग्रहादीनां च पूजनम् ॥ होमश्च बलिदानं च पूजायास्तदनन्तरम् ॥ वेदपाठोग्रहां स्तुत्वा द्विजातीनां प्रतर्पणम् । पूर्णाहुत्यभिषेकं च ततो यज्ञप्रदक्षिणा ॥ विसर्जनंक्रमः शान्तेर्घनश्यामेन कीर्तितम् ।



